ततः प्रविशति मातलिसारथिना रथेन चामरधारिण्या वीज्यमानो दशरथः । समन्तादवलोक्य कथमुचिद्रपारिभद्र-द्रुमस्तबकरमणीयारुणसन्ध्यानुबन्धिनि गगनाङ्गणपृष्ठे प्रतिष्ठामहे । विचिन्त्य । अहो कापि वैचित्री वर्तते अन्तरिक्षकृतो प्रभातसमयस्य तथाहि ।

व्योमोत्सङ्गविभूषणस्य सवितुर्द्यावापृथिव्योः समं
ध्वान्तध्वस्तिरुदङ्कुरैश्च किरणैः प्रारम्भि चावाङ्कुरैः ।
प्रत्यासन्नविरोधितस्य गगने मन्दाकिनीसद्मनां
पद्मानां प्रकरः प्रगेऽपि विकसत्यावृत्तकोशच्छदः ॥ ९ ॥

अपिच ।

निर्याति प्रथमप्रचारसमये स्फारध्वनद्डिण्डिम-
स्रस्ताधोरणदूरनामितगजेनाऽयं नभोवर्त्मना ।
अभ्रं वा जघनान्तदोलितकरः स्वर्वाहिनीं गाहितु
रोधस्ताडनकेलिरुग्णदशनग्रावाश्रिरैरावणः ॥ १० ॥

स्मरणमभिनीय । आर्य मातले सकलसुरसुन्दरीकरतलान्दोलितचामरचिकुरचुम्ब्यमानमांसलांसस्थलीसंदानितसन्तानकुसुममालाप्रालम्बेन समददानवद्विरदनिकुरम्बडम्बरडामरैकहारिणा हरिणा समादिष्टोऽस्मि यथा सखे दशरथ गच्छ त्वं मिथिलां पुरीं यदावेदितं मे मर्त्यमण्डलचाराधिकारचतुरेण चारणचक्रेण यदुत शङ्करशरासनसमारोपणपणप्रवर्तितसीतास्वयंवरयात्रापरतन्त्रायां मिथिलायां शिथिलाभिमानयन्त्रिमन्यरास्थितिषु सकलपृथ्वीपालेषु ।

गात्रं गोत्राचलेन्द्रस्त्रिनयनवलयं यस्य सिञ्जा भुजङ्गो
विष्णुर्बाणः पुराणां त्रयमभयमभूद् दुःखलक्ष्यं शरव्यम् ।

धन्वी येनेन्दुमौलिः स च भुवनगुरुस्तद्धनुर्धाम धाम्नां
क्रूरक्रेङ्कारभारात्स्वभुजवलयितं रामभद्रेण भग्नम् ॥ ११ ॥

गुरुधनुर्ध्वंसजनितामर्षविषमेण वीतत्रासरेणुना रैणुकेयेन सह रामभद्रस्य समरसंरम्भो भवितेति तत्र च तत्प्रतिकृत्य वधूवरमयोध्यामध्यारोप्य सुरकार्यशेषसंपत्तये पुनरनाहूतेनोपस्थातव्यमिति । तन्नमुचिसूदनसारथे कथय स भगवान् पौलोमीवल्लभो भृगुपतिचरितानि बहु मन्यते न वा ।

मातलिः । किं नाम बहु मन्यते न वेति शृणु श्रावयामि ।

आस्थानसद्मनि विलासगृहे विमाने
जैत्रे रथे च सततं सुरचक्रवर्ती ।
रामस्य चित्रलिखितानि कुतूहलेन
वीरो विलोकयति पूर्वविचेष्टितानि ॥ १२ ॥

यदस्यैव पुरन्दरस्यन्दनस्य चतुर्दिशं मत्तवारणीयफलकेषु रामचित्रं लिखितम् । अङ्गुल्या निर्दिशन् तत्तावदितो दीयतां दृष्टिः । इयं च प्ररोचना भृगुपतिपराक्रममहानाटकस्य यदुत भगवतस्त्र्यम्बकात् कार्मुकोपनिषल्लाभः ।

दशरथः । कथमयं विशालशिलः शिलोच्चयः । तत्रापि हिमालय इति प्रालेयपाण्डुराभिः शिखरश्रेणीभिर्लक्ष्यते ।

मातलिः ।

शैलेन्द्रो हिमवानयं गुरुगुहागर्भस्थविद्याधरी-
गीतस्वच्चरितः कृताश्रमपदो रुद्रेण पत्न्या सह ।
एतस्मिंश्चिरजीविभिः परिगतं दिव्यौषधीसेवनात्
कन्दर्पस्य वपुष्मतश्च चरितं राजवनद्रुस्य च ॥ १३ ॥

अन्यतो दर्शयन् इह धनुर्वेदविद्योपदेशः ।

देवस्त्र्यम्बक एष वन्द्यचरणो वृन्दैः सुधाभोजिना
मत्रास्ते स शरासनोपनिषदं दातुं धृताचायकः ।
दूरावर्जितमौलयः सरभसाः सद्यः प्रतीच्छन्त्यमी
हेरम्बेण च षण्मुखेन च समं रामादयः सुव्रताः ॥ १४ ॥

दशरथः । अहो मनुष्यमुनिमहाभागधेयो भगवान् भार्गवो यस्य स्वयमर्द्धेन्दुमौलिर्धनुर्वेदविद्याचार्यः ।

सौदामिनी । कधं अधिगदोवदेसरहस्सा खुरलीखेलिणो इदो एदे वट्टन्ति किं उण दूरदेसप्पसरो लक्खविक्खेवो णिव्विडप्पहारित्तणं च रामबाणाणं सविसेसमालिहिदं एत्थ* ॥

मातलिः । अहो महदन्तरं प्रज्ञाप्रकर्षस्य तथाहि ।

उपदिशति समानं कर्म कृत्स्नं पिनाकी
सममपि च यतन्ते कर्तुमभ्यासमेते ।
तदपि भृगुकुलेन्दुः काममुत्कृष्यतेऽसौ
ननु भवति निर्वीतं द्रव्यमेव क्रियाभिः ॥ १५ ॥

पुरोऽवलोक्य । अति हि नाम स्वच्छन्दचरितस्याऽपि देवस्य माध्यस्थ्यं तथाहि ।

बर्हिध्वजेऽपि सति सत्यपि दन्तिवक्त्रे
प्रेमोपधानमवधूय पिनाकपाणिः ।
हस्तेन नित्यधृतवासुकिकङ्कणेन
प्राज्ञप्रियः स्पृशति भार्गवमेव पृष्ठे ॥ १६ ॥

* कथमधिगतोपदेशरहस्याः खुरलीखेलिन इत एते वर्तन्ते। किं पुनर्दूरदेशप्रसरो लक्ष्यविक्षेपो निबिडप्रहारित्वं च रामबाणानां सविशेषमालिखितमत्र ।

पुरतोऽवलोक्य कथं खुरलीखेलनप्रसरत्पृषत्कपङ्क्तीनां त्रिनयनान्तेवासिनां चेतसि विरचितं पदं परस्परस्पर्द्धया । पुनरवलोक्य कोदण्डपाण्डित्यनिबन्धनः प्रवृत्त एव कलहः ।

दशरथः । एवमेवैतत् ।

दुन्दुारम्भविजृम्भितभ्रुकुटिना भालेन रामे मुनौ
कोदण्डं निबिडाङ्गुलीपरिगमाद्दास्फालयत्यग्रतः ।
ज्यानिर्घोषकषायितोदरजुषां गीर्वाणसेनापतेः
षड्भक्तीश्रवसां करोति स करद्वन्द्वं पिधानक्रियाम् ॥ १७ ॥

सौदामिनी । एस समरङ्गणसमासण्णकेलाससिहरणिवेसी भअवं वुसहलञ्छणो समं विसाहजणणीए देवीए पेक्खदि णन्दिप्पमुहसेणावदिपरिव्वुदाणं कुमारहेरम्बाणं रामेण सह झत्ति समरसंरम्भविवसिदं * ।

मातलिः । न केवलं पश्यति स्वमनोषिकोत्कर्षिणि शिष्ये किमपि प्रीयते यतः ।

सम्यक्कोदण्डविद्या विनयचतुरता कुत्र सोल्लेखरेखा
पुत्रान्तेवासिनोर्मे सपदि परिणतेत्येष वेत्तुं विशेषम् ।
देवः श्रीचन्द्रचूडामणिरचलसुतापाणिपद्मावलम्बी
स्थित्वोद्ग्रीवं विटङ्कात् स्फटिकशिखरिणो वीक्षते निश्चलाक्षः ॥ १८ ॥

दशरथः । अति हि प्रीयते यतः ।

* एष समराङ्गणसमासन्नकैलासशिखरनिवेशी भगवान् वृषभलाञ्छनः समं विशाखजनन्या देव्या प्रेक्षते नन्दिप्रमुखसेनापतिपरिवृतयोः कुमारहेरम्बयो रामेण सह झटिति समरसंरम्भव्यवसितम् ।

नन्दवन्दिनि चण्डचण्डचरिते हेलाचलच्चन्द्रम-
स्युद्दामद्विरदास्यहास्यरसवत्याविष्टघण्टामुखे ।
भ्राम्यद्भृङ्गिरिटौ च भङ्गुरगणग्रामे सहैवोमया
संग्रामे प्रहरत्वयं दिशिदिशि प्रेम्णा हरेणेत्यते ॥ १८ ॥

मातलिः । इतइतः पश्य हास्याद्भुतयोरधिष्ठानम् ।

दोर्दण्डद्वितयाञ्चितोत्ततधनुर्यन्त्रप्रसूतेषवः
शुण्डोद्दण्डपरश्वधाः परिणमद्दन्तार्गलाकोटयः ।
एताः कर्णविकीर्णवज्रकवचाः संरम्भिणः सङ्गरे
हेरम्बस्य हरन्ति हन्त हृदयं द्राक्कोपविक्रान्तयः ॥ २० ॥

नरनागक्रियामिश्रा हृतरुद्राम्बकक्रियाः ।
दुर्धरा हन्त हेरम्बरणव्यापारकेलयः ॥ २१ ॥

सौदामिनी । कुञ्जराणणरणकम्मणिम्माणपडिकोविदेण जमदग्गिसूणुणा उवक्कन्तं किंपि जेण णासन्तगणगामं समज्जिदं विग्र समरङ्गणं पडिहाग्रदि * ।

दशरथः । साधु सौदामिनि साधु यथा समर्थयसे ।

अत्रैते प्रमथाः सरन्ति सभियः कैलासशैलान्तरं
नन्दी भृङ्गिरिटिश्च लूनधनुषावत्रेषुधी मुञ्चतः ।
हेरम्बस्य च मुक्तमत्र मधुपैस्त्रासादमाद्यन्मुखं
क्रौञ्चारिः परमेव तिष्ठति हसन् सङ्ख्ये शरैः पूङ्खितैः॥२२॥

पुरोऽवलोक्य । कथं जामदग्न्यस्य पुरतोऽप्सरावली । वाचयति ।

---

* कुञ्जराननरणकर्मनिर्माणपरिकोपितेन जमदग्निसूनुनोपक्रान्तं कि-मपि येन नश्यद्गणग्रामं संमार्जितमिव समराङ्गणं प्रतिभाति ।

त्वं पुत्रस्त्रिपुरद्रुहः पुनरहं शिष्यस्तदेतावता
तुल्योऽप्यस्तु कथं तवायमधिकः कोदण्डशिक्षाविधिः ।
तत्राधारनिबन्धनो यदि भवत्याधेयधर्मोदय-
स्तद्वाः स्कन्द गृहाण कार्मुकमिदं निर्णीयतामन्तरम् ॥२३॥

मातलिः । भूकाश्यप पुरतः पश्य सहसा षण्मुखं संमुखीभूय स्थितवन्तं गजाननं च भृगुपतिः पाशुपतास्त्रेण ज्योतिश्चक्रटाङ्कादितरोदःकन्दरकुहरडामरेण हर्षादुपतिष्ठते ।

दशरथः । कथमत्तरावली वाचयति ।

क्रोधोद्बोधव्यतिकरसदृग्भिराभ्यासयोग्यो
मद्दोर्दण्डोपगमसदृशस्त्वत्तशिष्योचितश्च ।
दत्तातङ्को विबुधमनसां कर्तुमद्धा कबन्धं
चापादस्मात् प्रसरतु शरः सम्मुखः षण्मुखेऽपि ॥ २४ ॥

मातलिः । अत्रान्तरे किञ्चिज्जातम् ।

किञ्चित्कोपकषायितेन मनसा यावत् सतीसूनवे
त्रेयतं भृगुनन्दनो निजधनुर्यन्त्रे निधत्ते शरम् ।
हेलास्रस्तदुकूलसंवृतिमतो विस्रंसिकाञ्चीलता
तावद्व्याकुलनूपुरं भगवती मध्ये मृडानी स्थिता ॥ २५ ॥

दशरथः । पुरतोऽवलोक्य । अयं तु प्रकृत्युद्धतो रामः कथमित्थमतिप्रश्रयते । तदस्य त्रिभुवनातिशायि चरिताद्भुतं तथाहि ।

दृष्ट्वा रामः किसलयसमं पाणिमुद्यम्य सम्य-
ङ्मध्ये भूतां गिरिदुहितरं षण्मुखस्यात्मनश्च ।

संहृत्यास्त्रं विधृतशरधिर्मुक्तकोदण्डदण्डः
पादौ मार्जन्नमति नमता प्राग्जटामण्डलेन ॥ २६ ॥

सौदामिनी । अहो पसादादिसओ रामम्मि चन्दसेहरम्म तन्यभवं मच्चमण्डलाखण्डल ता इदो पेक्ख * ।

दशरथः । दृष्ट्वा ।

येनात्र खण्डपरशुः परशूत्तमेन
शम्भुः सुमेरुतटताडनखण्डितेन ।
रामाय निर्जितवते नमसौ कुठार-
मस्मै समर्पयति साञ्जलिसंपुटाय ॥ २७ ॥
दत्ते च विद्यास्थानानि देवस्तस्मै चतुर्दश ।
शतभङ्गीभवद्भुद्रा महतां हि प्रसत्तयः ॥ २८ ॥

सौदामिनी । संकं तदो पहुदि रामो परसुरामोत्ति उच्चदि † ।

मातलिः । इदमग्रतः पश्य ।

यः शृङ्गाग्रैः सर्गणमरुणात् क्रौञ्चशैलः सहेलं
यातुः शम्भोर्द्रनुरुपनिषत्प्राप्तये पादमूलम् ।
सोऽयं कोपाद्गुहाति विहितं मार्गणैर्भार्गवस्य
छिद्रद्वारं त्रिदिवसरसीहंसयात्रापवित्रम् ॥ २९ ॥

अथेदमग्रतः पश्य अयं हि पितृभक्त्यतिशयः परशुरामस्य यदुत रेणुकाशिरश्छेदः ।

---

* अहो प्रसादातिशयो रामे चन्द्रशेखरस्य तत्रभवन् मर्त्यमण्डलाखण्डल तदितः प्रेक्षस्व ।

† शङ्के ततः प्रभृति रामः परशुराम इत्युच्यते ।

दशरथः । अहह शान्तं पापं कथं जमदग्न्यपत्यमपि प्रमाद्यति हंहो पुरुहूतसूत ।

सहस्रं हि पितुर्माता गौरवेणातिरिच्यते ।
तत्किं पितृगिरा रामो विधत्ते रेणुकावधम् ॥ ३० ॥

यद्वा निरपराधवधादेव जमदग्निरपि प्रमाद्यतिस्म । विचिन्त्य कः पुनरयं मार्गा भार्गवस्य यदिदमपि प्रस्मर्यते ।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३१ ॥

सैादामिनी । कर्णा पिधाय कहं उण भअवदा भग्गवेण सुदं सवर्णेहिं सुणिअ वा अणुचिदआरि अणुट्ठिदं परसुधारावावारेण * ।

मातलिः । अथाग्रतः पश्य ।

दशरथः । दृष्ट्वा कथं प्रत्यापन्नजीविता पुनरस्य माता ।

मातलिः । आश्चर्यमाश्चर्यम् ।

यावद्वरं न वृणुते किल जामदग्न्य-
स्तुष्टात् पितुः स्वजननीप्रतिजीविताय ।
तावच्छिरः पृथगपि स्थितमस्य मातु-
र्वेगादुपेत्य विदधात्यकबन्धभावम् ॥ ३२ ॥

सैादामिनी । तक्खणजणिदजीविदावदाणस्स सोहइ जणणीसिरच्छेदोवि भअवदो भग्गवस्स † ।

* कथं पुनर्भगवता भार्गवेण श्रुतं श्रवणाभ्यां श्रुत्वा वाऽनुचितकार्यनुष्ठितं परशुधाराव्यापारेण ।

† तत्क्षणजनितजीवितावदानस्य शोभते जननीशिरश्छेदोऽपि भगवतो भार्गवस्य ।

दशरथः ।

यच्छिन्नं जननीशिरः पितृवराद्वयोऽपि यत् संहित
तच्छिष्यस्य पिनाकिनो महदभूच्चित्रं चरित्रं किल ।
तेनैतेन कथाद्भुतेन तु वयं वाचाऽपि लज्जामहे
यद्वा ते गुरवोऽविचिन्त्यचरितास्तेभ्योऽयमस्त्वञ्जलिः ॥ ३३ ॥

मातलिः । इदमन्यद्दृश्यतां द्रष्टव्यम् ।

दशरथः । अयं हि प्रचण्डदोर्दण्डसहस्रदुःसहो हैहयनरेन्द्रः श्रूयते ।

मातलिः ।

इष्टापूर्तपवित्रमाश्रमपदं प्राप्तोऽयमत्रार्जुनो
राजानं जमदग्निरत्रभगवान् सज्जातिथेयोऽर्चति ।
धेनोः कामदुहः कृतोऽत्र च मुनेर्वत्सापहारोऽमुना
प्राणान्मुञ्चति चैष गोग्रहविधावार्चीकिरस्मिन् मुनिः ॥३४॥

सौदामिनी । पुरतोऽवलोक्य सविचिकित्सम् । अहह अक्खत्तिअगोत्तोचिदं आचरिदं बाहुसहस्सजुत्तेण सहस्सज्जुणेण जं दाणिं समररच्छामुच्छिदभत्तारपरित्ताणणिमित्तं उअरि णिवेसिदणिअसरीरा पडिव्वदाणं पढमोदाहरणं रेणुआ किवाणधारापहारोहिं तहिं तडित्ति ताडिदा * ।

दशरथः । कथं महतामपि प्रमादः । तदहो किमपि कन्दलितानुरागाः संसारभोगाः ।

---

* अक्षत्रियगोत्रोचितमाचरितं बाहुसहस्रयुक्तेन सहस्रार्जुनेन यदिदानीं समररथ्यामूर्छितभर्तृपरित्राणनिमित्तमुपरि निवेशितनिजशरीरा पतिव्रतानां प्रथमोदाहरणं रेणुका कृपाणधाराप्रहारैस्तत्र तडिति ताडिता ।

मातलिः। पुरतोऽवलोक्य। अयमितो महावीरः पृष्ठास-ञ्जिततूणीरः परमेश्वरोपदिष्टधर्मा सज्जीकृतकार्मुककर्मा परशुधाराज्योतिरुज्जृम्भणडामरः समरपरितोषितामरः सकलारण्यकजननिवेदितवृत्तान्तः साक्षादिव कृतान्तः शिखण्डिकेतुकाण्डावलीभिरभ्यहूतः शशिशेखरसेवानिवृत्तः सरभसमितोऽभ्युपेतः। कथमियमग्रतो वर्णावली। वाचयति।

विद्वान् दारसखः परं परिणतो नीवारमुष्टिंपचः
सत्यज्ञाननिधिर्दधत् प्रहरणं होमार्जुनीहेतवे।
रे दुःक्षत्रिय किं त्वया मम पिता शान्तो मया पुत्रवान्
नीतः कीर्त्यवशेषतां तदिह ते धिग्धिक्सहस्रं भुजान् ॥३५॥

मातुः प्रहारत्रयमाहितं मे
विनापराधादिह हैहयेन।
निःक्षत्रियां त्वां विनिहत्य तेन
त्रिःसप्तकृत्वो जगतीं करोमि ॥ ३६ ॥

भोभो निरवद्यवाचस्तपोधनाः किं मम कोपप्रशमं परिमार्गध्वं तदस्मिन् परवान् वर्ते।

सा सूतिश्च्यवनान्वये व्रतविधिः सोऽयं च वैखानसस्ता एताश्च गुरोरनड्डुदहनात् संस्कारशुद्धाः क्रियाः।
तत्त्वज्ञानमिदं च यत्किल दया भूतेषु धर्मः परः
सर्वं तत् परिहृत्य मातृवधजः क्रोधानलो जृम्भते ॥ ३७ ॥

मातलिः। सत्यसङ्गरः परशुरामः।

ज्यावल्लीबद्धलङ्केश्वरसकलसुहृद्दीनविज्ञापनायां
दत्त्वा यः कर्णमूले यदुत चिरतरं शिक्षितां राक्षसेन्द्रः।

सोऽपि ज्याखस्कन्धबन्धत्रुटितभुजतरुर्भार्गवेणैव रोषात्
कीर्तिस्तम्भोपमश्रीः परशुविहृतिभिर्द्राक्कृतः कार्तवीर्यः ॥३८॥

सौदामिनी । सच्चं परसुरामो भअवदो भग्गस्स सिस्सो
किं उण भैरवरूवधारिणो ण उण सदासिवस्स कहं अण्णधा
से भुअदण्डखण्डणेक्कमल्ला परक्कमारम्भा * ।

दशरथः ।

एष त्रिःसप्तकृत्वस्त्रिभुवनतिलको मायकः क्षत्रियाणां
तावद्गा भूतधात्र्याः क्रतुषु गुणवते कश्यपाय प्रदाता ।
खाता क्षत्रास्रवापीष्वतनुषु बहलक्रोधवह्निप्रशान्त्यै
पित्रोः किञ्च प्रवीरः सपदि वितरिता तच्चिवापाञ्जलीनाम् ॥३९॥

पुरोऽवलोक्य । अहो भार्गवपुङ्गवस्य पराक्रमातिशयो य-
दियं दशा वर्तते महीपालानां तथाहि ।

याचन्ते गृहिणीमुखैर्नृपतयः स्वप्राणभिक्षामिमे
बध्नन्तश्चरणाग्रयोर्निपतिताः कण्ठे कुठारान् परे ।
लीलादर्पणपाणयो विरचितस्त्रीवेशमेते नताः
किञ्चान्ये विगलन्ति चीवरभृतो द्वार्वेदिकाशायिनः ॥४०॥

मातलिः । पुरोऽवलोक्य तदिदमतिचरमं चरिताद्भुतं पर-
मेश्वरशिष्यस्य परशुरामस्य ।

दत्त्वा पृथ्वीं जलधिरसनामर्थिने ब्राह्मणाय
स्फारज्योतिःशरविहृतिभिः सिन्धुमुक्ते परान्ते ।

---

* सत्यं परशुरामो भगवतो भर्गस्य शिष्यः किं पुनर्भैरवरूपधारिणो न
पुनः सदाशिवस्य कथमन्यथाऽस्य भुजदण्डखण्डनैकमल्लाः पराक्रमारम्भाः ।

ब्रह्मावाप्त्यै जयपरशुनास्मिन् समित्काण्डलावः
शिष्यः शम्भोर्विहितवसतिस्तप्यतेऽसौ तपांसि ॥ ४१ ॥

दशरथः । किमपरमारम्भपर्यवसानयोरखण्डः खण्डपरशुशिष्यस्य वीरव्रतनिर्वाहः ।

सौदामिनी । उभअं खु एदं अप्पडिहदप्पहावं सुणिमो जं णीललोहिदणिडाललोअणुल्लासी भअवं हुदवहो जं चण्डीसकोअण्डरहस्सोवदेसणीसंदपल्लविदपदावप्पसरो परसुरामोत्ति* ।

दशरथः । समन्तादवलोक्य । आर्य मातले महावीरचरितावलोकनपरायत्ते चित्ते न किञ्चित्प्रतिभाति । तत्कथय कतमः पुनरयमन्तरिक्षोद्देशो यत्र वर्तामहे ।

मातलिः । पुरन्दरनगरीतः सप्तमो मर्त्यमण्डलतः प्रथम एष वायुस्कन्धः किं पुनरदूरवर्तिवसुधातलादस्मद्रथगतिः । रथवेगनाटितकेन सेयं विदेहनगरी तदिदं च विदेहपतिमन्दिरं तदवतीर्य महाराजदशरथो मामनुज्ञानातु स्वर्गगमनाय सौदामिनीं च । अयं च मिथिलेश्वरप्रतीहारः प्रत्यभिज्ञाय भवन्तमभ्युत्थितः ।

दशरथः । अवतीर्य आर्य मातले भद्रे सौदामिनि साधयतं युवामिति ।

प्रविश्य प्रतीहारः प्रणम्य च इतइतोऽभ्येतु महाराज दशरथः ।

---

* उभयं खल्वेतदप्रतिहतप्रभावं शृणुमो यन्नीललोहितभाललोचनोल्लासी भगवान् हुतवहो यच्चण्डीशकोदण्डरहस्योपदेशनिष्यन्दपल्लवितप्रतापप्रसरः परशुराम इति ।

दशरथः । परिक्रम्य हंहो सीरध्वजदौवारिक अपि वृत्त-विवाहमङ्गलो रामभद्रः ।

प्रतीहारः । न केवलं वृत्तविवाहमङ्गलः प्रस्थानोन्मुखश्च वर्तते तदर्थं च महाराजसीरध्वजो विश्वामित्रो रामभद्रलक्ष्मणौ सीताहेमप्रभे च तमिममास्थानमण्डपमधितिष्ठन्ति ।

दशरथः । हृदय किमुत्कण्ठसे सवधूटीकं रामभद्रं पश्येति प्रविशतः ।

ततः प्रविशन्त्युपविष्टा यथानिर्दिष्टाः सीरध्वजादयः ।

शतानन्दः सीतायाश्चिबुकमुन्नमय्य ।

यस्यास्ते जननी स्वयं क्षितिरियं योगीश्वरोऽयं पिता
मातर्मैथिलि शिक्ष्यते कथय किं तस्याः सुजातेस्तव ।
स्नेहात्केवलमुच्यते पुनरिदं स्त्रीणां पतिर्दैवतं
यद्भूयास्त्वमपास्य धर्ममपरं छायेव रामानुगा ॥ ४२ ॥

सीता । लज्जते ।

जनकः । वत्से वैदेहि यदभिधानीयं तदभिहितं कुलगुरुणाऽऽङ्गिरसेन तथाप्यपत्यस्नेह एव मां वाचालयति ।

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राच्यैः पुत्रि निवेदिताः कुलवधूसिद्धान्तधर्मा अमी ॥ ४३ ॥

शतानन्दः । जानकि इदं च प्रसङ्गानुगतं शिक्ष्यसे ।

निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता भव
स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ।

पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्वेदिषु
स्त्रीणां संवननं नतभ्रु तदिदं वार्तौषधं भर्तृषु ॥ ४४ ॥

सीता रोदिति ।

जनकः । निःश्वस्य ।

सीते संवृणु बाष्पवारि भवती मुग्धा ममेदं मनो
व्युत्पत्त्याऽपि हि याज्ञवल्क्यगुरुतः संसारभागे स्थितम् ।
किन्त्वान्यत्कथयामि मे हृदयतो ह्रीमुद्रया प्रोषितं
विश्वामित्रमहामुनेरपि पुरो यल्लोचने साश्रुणी ॥ ४५ ॥

शतानन्दः । कथमिव भगवान् कुशिकनन्दनोऽपि व्रीडा-व्रीजं यस्यास्य ।

सांसारिकैर्वचोभिस्ते सीताविश्लेषजन्मभिः ।
द्रवतीव मनो बाष्पैर्विश्वामित्रमुनेरपि ॥ ४६ ॥

रामः । स्वगतम् कथमियं रोदिति । विभाव्य ।

बाष्पोत्पीडः श्लथपुटतया तावदन्तर्निरुद्ध-
स्तूर्णोत्तीर्णस्तरलनयनस्तारकाभ्यां निपातः ।
सान्द्रस्यन्दः सपदि चपलैः पक्ष्मभिः प्रान्तकीर्णः
पूर्णस्रोतास्तदनु सुदृशा लोठितोऽवक्रकण्ठम् ॥ ४७ ॥

विचिन्त्य रुदन्त्यपि किमपि जानकी समाधाय मधुरस्य हि मानुषस्य प्रकृतिरेषा । तद्यथाकथमपि रमयति ।

सीता । ताद उम्मिलामण्डवीसुदकित्तीहिं समं गमिस्सं * ।

विश्वामित्रः । भो ता अपि यास्यन्ति ।

हेमप्रभा । तव सिक्खिदं भअवदा किंपि † ।

---

* तात उर्मिलामाण्डवीश्रुतकीर्तिभिः समं गमिष्यामि ।

† तव शिक्षितं भगवता किमपि ।

शतानन्दः । अति हि मुग्धा जानकी ।

प्रतीहारः । देवो दशरथो राजन् संबन्धी ते समागतः शतक्रतुरथेनायमभ्युत्थानेन पूज्यताम् । सर्वे सहसा समुत्थाय यथोक्तं कुर्वन्त्युपविशन्ति च ।

जनकः । पुरन्दरस्य सखे संबन्धिन् दशरथ ।

मया विना विवाहोऽभूदिति चेतसि मा कृथाः ।
यदासीत् सन्निधौ तत्र स्वयं कुशिकनन्दनः ॥ ४८ ॥

नेपथ्ये ।

उच्चण्डाच्चन्द्रचूडालिकफलकतटानद्धतेरूर्ध्वनेत्रात्
त्रैलोक्याकाण्डरोगज्वरजननगुरोर्मण्डितुर्मण्डलस्य ।
उत्तप्तस्वर्णचूर्णप्रतिकृति विकिरन् दिङ्निकुञ्जेषु तेजः
कोऽयं वेगाद्युष्मानिव सरति दृशां बर्हणो बर्हिरुत्थः ॥ ४९ ॥

पुनस्तत्रैव ।

यत्तूणे परशुर्धनुर्गुणनतं पाणौ शराः पञ्चषाः
कृष्णैणाजिनमक्षसूत्रवलयं यज्ञोपवीतं जटाः ।
तद्नूनं जमदग्निजो मुनिवृषो रोषादुपैत्यग्रत-
स्तुल्यं मूर्तिमिवैष बिभ्रदुभयीं वीरस्य शान्तस्य च ॥ ५० ॥

जनकदशरथौ । भगवन्नाङ्गिरस सज्जातिथेयो भव भार्गवोऽतिथिर्भवति ।

शतानन्दः । अस्त्यतिथिरयं किं पुनः समरश्राद्धकर्मणि ।

रामः । वत्स लक्ष्मण निखिलवैखानसवन्द्यो वीरग्रामणीः क्षत्रपरम्परोत्पादितकौतुकातङ्कमुद्रो भगवान् भार्गवो दिष्ट्या द्रष्टव्यः ।

लक्ष्मणः । आर्य न केवलं द्रष्टव्योऽनुभवितव्यश्च ।

रामः । के वयं भार्गवानुभवे ।

सीता । अपवार्य पिअसहि हेमप्पहे चण्डीससिस्सो खत्ति-अअन्तअरो अ परसुरामोत्ति सुणिअ पल्लविदकोदूहलवल्ली पज्जलिदसझ्झसरसपरवसा वट्टामि * ।

हेमप्रभा । जुज्जदि पप्फुल्लकोदूहलत्तणं परसुरामदंसणेण उण ससझ्झसत्तणं भग्गधणुद्दण्डचण्डचरिदस्स पुरदो राम-अन्दस्स † ।

ततः प्रविशति सरोषसंभ्रमो जामदग्न्यः ।

जामदग्न्यः । भोः किमसावकाण्डचण्डो निबिडकडत्कार-पूरितरोदसीकन्दरोदरमेदुरो निनदनिस्यन्दः । कर्णं दत्त्वा आकाशे । किं ब्रूथ दाशरथिना रामेण स्थाणवीयं धनुरारो-पितमाकृष्टं भग्नं च तदुद्भवः कोदण्डकोटरकुटीरकटुरसौ सुट-ङ्कुष्टङ्कारः । सविषादम् ।

पौलस्त्यस्य तिरस्कृतामरपतेस्ते बाहवो विंशति-
र्दम्भोलिव्रणगुच्छलाञ्छनभृतो यस्मिन् गताः कुण्ठताम् ।
तद्भग्नं यदि कार्मुकं भगवतो रामेण चूडावता
धिग्धिङ्गां तदिदं नमः परशवे स्वस्त्यस्तु रुद्राय च ॥ ५१ ॥

विचिन्त्य । आत्मानं निर्दिशन् सत्यसङ्कल्पस्तदेष परशुरा-मः । तदेकवारं गुरुष्वपि प्रतिज्ञातमर्थं कथयति । यदित्थं

---

* प्रियसखि हेमप्रभे चण्डीशशिष्यः क्षत्रियान्तकरश्च परशुराम इति श्रुत्वा पल्लवितकौतूहलवल्ली प्रज्वलितसाध्वसरसपरवशा वर्ते ।

† युज्यते प्रफुल्लकौतूहलत्वं परशुरामदर्शनेन पुनः ससाध्वसत्वं भग्नध-नुर्दण्डचण्डचरितस्य पुरतो रामचन्द्रस्य ।

कथयन्ति गुणदोषयोर्युगपदापततोर्गरीयसि प्रयतितव्यम् ।
अञ्जलिं बद्ध्वा आकाशतः ।

भोः सर्वे च्यवनादयः शृणुत मे रामस्य विज्ञापना-
माज्ञां वो न च लङ्घयामि किमु तद्भर्गस्य भग्नं धनुः ।
क्षणात्त्रियमेकविंशतिमतो वारान् विधातुर्जग-
द्दुर्विशोऽपि ममैव संप्रति पुनर्जातः प्रतिज्ञाक्षणः॥ ५२॥

सहसा परिक्रम्य । धनुर्भङ्गदर्शनं नाटयित्वा हा शङ्कर-
करान्दोलनदुर्ललित हा त्रिपुरदहनडम्बरहठकर्मकर्मठ हा गी-
र्वाणसारपरमाणुनिर्माण हा दुर्जनजनकसदनदुर्निक्षेप हा न-
नसकलनाक पिनाक त्वमपीदृशं दृश्यसे तदिदमापतितं लू-
तातन्तुना गन्धगजालानसंदानं सूचीतुण्डेन वज्रमणिभेदः ।
तथाहि ।

पार्वत्या निजभर्तुरायुधमिति प्रेम्णा यदभ्यर्चितं
निर्मोकेन च वासुकेर्निचुलितं यत् सादरं नन्दिना ।
निर्दग्धत्रिपुरेन्धनं धनुरिदं तत् मन्मथोन्माथिनः
शिष्ये सत्यपि रामनामनि मयि द्वेधा कृतं दृश्यते॥ ५३॥

सक्रोधगर्वं समन्तादवलोक्य भोभो प्रोषितजामदग्न्यं जग-
द्वीरं मन्यमाना वीरंमन्याः क्षणमात्रमवधत्त ।

चूडापञ्चकमण्डनः क्व नु शिशुश्चण्डः क्वचायं मुनि
र्नित्याकुण्ठखुरप्रखण्डितबृहत्क्रौञ्चाद्रिगर्भान्तरः ।
तत् सर्वानपि वः स्वयंवरविधौ राज्ञः समेतान् ब्रुवे
रामं रक्षत शक्तिरस्ति यदि वः क्रुद्धः पुनर्भार्गवः॥ ५४॥

कर्णं दत्त्वा आकाशे । किं ब्रूथ वह्निरेव वह्नेर्भेषजं राम एव
रामस्य रक्षिता न परवीर्यरक्षणीयं रघुकुलमिति । विभाव्य । न

निजवीर्यरक्षणीयं नापरवीर्यरक्षणीयं रघुकुलं नीललोहितान्ते-
वासिनि रामेऽभियोक्तरि । विचिन्त्य । अहो कालपरिपाको यद-
श्रुतपूर्वाणि वचांसि श्रूयन्ते यदनालोकितचराणि चालोक्यन्ते
मखेदम् । इदं च दुःसहतरं निकारान्तरम् । हस्तमवधूय ।

अद्यापि धिक्किमिव जीवति भार्गवोऽसौ
बाणावलूनगुहवाहनबर्हदाम्नः ।
यस्यावमत्य गुरुदत्तमिमं कुठारं
डिम्भोऽपि राम इति नाम यदस्य हर्ता ॥ ५५ ॥

कर्णं दत्त्वा आकाशे । किं ब्रूथ केन न वर्णितं दाशरथेः
शङ्करकार्मुकारोपणं को न विस्मितस्तद्वृद्धेन साक्षेपम् । किमुक्तं
केन न वर्णितमित्यादि पठति । तच्छृणुत भोः ।

यः कर्ता हरचापदण्डदलने यश्चानुमन्ता ननु
द्रष्टा यश्च परीक्षिता च य इह श्रोता च वक्ता च यः ।
सद्यः खण्डितकण्ठपीठवलयः केलिं करिष्यत्ययं
कीलालोल्लसितस्य तस्य परशुर्भर्गप्रसादीकृतः ॥ ५६ ॥

सरभसं परिक्रम्य । भो विदेहेश्वरशुद्धान्तसंचारिणः कुब्ज-
वामनकिरातवर्षवरसौविदल्लाः क्व रामो दाशरथिः । न-
न्वेष भार्गवोऽभ्युपैति ।

लूनक्षत्रियकण्ठमण्डलगलत्कीलालकुल्याभृत-
प्राग्भारेषु सरःसु यस्तिषु रुषा चक्रे निवापक्रियाम्
श्रुत्वा धूर्जटिचापखण्डनं नाम्नस्य सापत्नकं
रामो राममयं स्वयं गुरुसहाध्यायी क्षमिष्यति ॥ ५७ ॥

रामः । वत्स लक्ष्मण दूरस्थादविभाविलेनापि तारतरेण
वचसा सरोषसंभ्रमो भार्गवो मुनिः प्रतिभाति ।

जामदग्न्यस्तदेव पठति ।

रामः । सरभसमुपसृत्य भगवन् भार्गव सदयं प्रसीद स व्यवहार इति रामोऽभिवादयितुकामः ।

जामदग्न्यः । विहस्य नाभिवादनप्रसाद्यो रेणुकासूनुः गरीयान् हि गुरुधनुर्भङ्गापराधः । किं न श्रुतम् ।

अपि कालस्य यः कालः कण्ठे कालो महेश्वरः ।
भार्गवस्तस्य शिष्योऽहं निसर्गनिरवग्रहः ॥ ५८ ॥

ततश्च ।

मध्येनरेश्वरसभं रभसेन येन
मुक्तं धनुस्तडिति च त्रुटितं गुरोर्मे ।
रामेऽपि नाम भजतां भुजदण्डयुग्म-
मुद्दामधामनि तदेतदकाण्डचण्डम् ॥ ५९ ॥

रामः । सविनयं केयमक्षान्तिर्भगवतो मुग्धबुद्धिषु मादृशेषु पुत्रभाण्डेषु पश्यतु हि तपोराशिः ।

बाह्वोर्बलं न कलितं न च कार्मुकस्य
त्रैयम्बकस्य तनिमा तत एष दोषः ।
तच्चापलं परशुराम मम क्षमस्व
डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ॥ ६० ॥

जामदग्न्यः । किं नाम तपोराशिरहं न शौर्यराशिः । किन्तु रे निदर्शितलाघव राघव स्ववर्णनापरं सगर्वमभिहितं तदाकर्णय यत्ते करोमि ।

त्रुटितनिबिडनाडीचक्रवालप्रणाल-
प्रसृतरुधिरधाराक्लिन्नोरुकण्ठम् ।

मडमडिति मृडानीकान्तचापस्य भङ्गः
परशुरमरवन्द्यः खण्डयत्यद्य मुण्डम् ॥ ६१ ॥

रामः ।

स्वायत्तेन कुठारेण स्वाधीने राममूर्द्धनि ।
यथेष्टं चेष्टतामार्यस्त्वदाज्ञां को निषेधति ॥ ६२ ॥

जामदग्न्यः । यः प्रेतनाथस्यातिथ्यमनुभवितुकामः ।

रामः । कृताञ्जलिं बद्ध्वा ।

अनूचानं भक्त्या भृगुभव भवन्तं प्रणमति
क्रुधः शान्त्यै रामस्त्वदिह सुकुमारं कुरु मनः ।
हठाच्च्यस्यत्कण्ठे परशुमपि नोत्तेजयसि मां
रघूणां ब्रह्माणः किमपि यदमी गोत्रगुरवः ॥ ६३ ॥

जामदग्न्यः । विहस्य ।

रुद्राणीधर्मसूनुर्विशिखविलिखनच्छिन्नक्रौञ्चाद्रिकुञ्जः
स्कन्दावस्कन्ददायी कुठरणरसिकक्षत्रियक्षोदकेलिः ।
दुर्वार्वीनव्यभितः शरधिधुरपयोराशिबद्धाश्रमोऽहं
भ्रष्टः श्रीकण्ठशिष्यो धनुषि धृतरतिर्ब्राह्मणो रैणुकेयः॥६४॥

शतानन्दः । किमुच्यते वीरवर्गवरिष्टः श्रीकण्ठशिष्यः ।

जामदग्न्यः । यदिहापि राजन्यपोते भार्गवो धनुर्धारयति तदसावस्यैवापराधो यदुत्फल्लफणं फणावन्तं न पश्यति । स तस्यैव दोषः । ततः ।

पक्ककर्पूरनिष्पेषमयं निरपिषत् त्रयम् ।
मम व्रीडां च चण्डीशचापं च स्वं च जीवितम् ॥ ६५ ॥

जनकः । कथं सन्यस्तशस्त्रग्रहणस्यापि मम पुनरस्त्रग्रह णलग्नो वर्तते । नेपथ्याभिमुखमवलोक्य कः कोऽत्र भोः भ नुर्धनुः ।

पुरुषः प्रविश्य धनुरुपनीय निष्क्रान्तः ।

जनकः । धनुरादाय ।

चण्डीशचापमवमन्तरि राजमेन्द्रे
शस्त्रत्यजाऽपि धृतमेव मया त्वमासीः ।
रामाय कार्मुक पुनः परिगृह्यमेऽद्य
वत्सेऽपि वाञ्छितवतेऽनुचितं चरित्रम् ॥ ६६ ॥

समाधाय ।

प्रणमति जनकस्त्वां देवि दिव्यास्त्रविद्ये
मम धनुषि पुराणे सन्निकर्षं कुरुष्व ।
परिभवति मदग्रे भार्गवो रामभद्र
प्रहिणु तदिह बाणान् बाहुक मा दुनोति ॥ ६७ ॥

दशरथः । सम्बन्धिन् जनक कृतं कृत कार्मुकपरिग्रहेण कि मिति प्रादुर्भूतसाहसावर्तसमपि जामातरमवजानासि ॥ पश्य ।

यस्योत्पत्तिर्दिनकरकुले यं महाभागधेयं
विश्वामित्रो धनुरुपनिषद्वैकशिष्यं व्यधत्त ।
श्रीकण्ठीये जनमविकलं यस्य चापे च दृष्टं
तस्यान्यस्माद्यदि परिभवः स्वस्ति वीरव्रताय ॥ ६८ ॥

विश्वामित्रः । महाराजसीरध्वज यथाह सम्बन्धी ते दश रथः । धनुरपनीय जामदग्न्य प्रति ।

रामः शिष्यो भृगुभव भवान् भागिनेयीसुतो मे
वामे बाहावुत तदितरे कार्यतः को विशेषः ।

दिव्यास्त्राणां तव पशुपतेरस्य मत्तस्तु लाभ-

स्तत् त्वां याचे विरम कलहादार्यकर्मारभस्व ॥ ३९ ॥

जामदग्न्यः । मातुर्मातुल न किञ्चिदन्तरं भवतो भवानी-वल्लभस्य च न किञ्चिदन्तरं क्षत्रियबटोस्त्वदन्तेवासिनः क्षत्रियान्तकरस्य शङ्करशिष्यस्य वा ।

शतानन्दः । अतिनिरर्गलवाग्भार्गवो यद्गुरुष्वपि नानुरुध्यते ।

जामदग्न्यः । किञ्च भोः स्वभुजोपार्जितब्रह्मभाव न शस्त्रग्रहणाधिकारः भवन्तमनुरुध्यते ।

रामः । ब्रह्मर्षे जामदग्न्य कः पुनरयं शस्त्रग्रहणाधिकारो यद्गुरुष्वपि तिरस्कारः ।

जामदग्न्यः । सभ्रुकुटीभङ्गम् । आः क्षत्रियखेट बटो वाचाटोऽसि ।

भग्नरुद्रधनुःखण्डप्रोतेन शिरसा तव ।

मुण्डधारी व्रती चाहमुपस्थास्ये कपालिनम् ॥ ४० ॥

रामः । भगवन् किं पुनरिमाः सर्वकषा रोषवाचः ।

सर्वत्यागी परिणतवयाः सत्तमः पद्मयोनेः

शिष्यः शम्भोरिति च यदि वः प्रश्रयी रामभद्रः ।

तत् किं भीमा भ्रुकुटिघटना तामिमां नास्मि सोढा

वोढा वीरव्रतविधिमयं यद्गुरुर्वोऽहमेति ॥ ४१ ॥

जामदग्न्यः । ततः किम् ।

रामः । ततश्चेदम् ।

यस्याचार्यकमिन्दुमौलिरकरोत् स ब्रह्मचारी चिरं

जातो यत्र गुहश्चकार च भुवं यद्गीतवीरव्रताम् ।

तत्कोदण्डरहस्यमद्य भगवन् दृष्टैव रामः स ते
हेलोज्जृम्भितजृम्भकेण धनुषा तत्र च नालं वयम् ॥ ७२॥

जामदग्न्यः । साधु रे क्षत्रियडिम्भ साधु साधु मातुर्मात-
नशिष्य साधु साधु ताडिकताडकाकुटुम्बक साधु साधु भग्नभर्ग-
बाणासन साधु साधु रैणुकेयगर्वाभिक साधु, किन्तु ।

चापं वृषाङ्कपिनिरस्तसमस्तसारं
द्वेधा विधाय रघुनन्दन मा स्म दृप्यः ।
वैकुण्ठकार्मुकमकुण्ठकठोरभाव-
मारोपयैतदिह चेत् तव शक्तिरस्ति ॥ ७३ ॥

इति धनुरर्पयति ।

लक्ष्मणः । पुरोभूयादाय च धनुः । आर्यआर्य आर्यालाभ-
पणीकृतप्रणयिनि शङ्करकार्मुकारोपणे के नामान्ये दोर्दण्डचण्ड-
समाचारोप्ये तु वैष्णवे धनुषि सति पदातिलवे लक्ष्मणे न
प्रभुरार्यः ।

सीता । स्वगतम् । वच्छ लक्खण सुलक्खणोसि जो राहव-
वकुलोचिदचरिदधुरं धारेसि * ।

विश्वामित्रः । रामभद्र भग्नधूर्जटिधनुषि ज्यायसि कनी-
यसो भ्रातुरुचितमेव माधवीयं चापमारोपयितुं भङ्क्तुं वा ।

लक्ष्मणः । आरोपयति ।

शतानन्दः ।

दोर्दण्डन्यासलीलानमदटनि तदुत्कारि नारायणीयं
सद्यः सज्जीकृतज्यं विरचयति धनुर्लक्ष्मणे श्यामलक्ष्म ।

*वत्स लक्ष्मण सुलक्षणोऽसि यो राघवकुलोचितचरितधुरं धारयसि ।

रामस्याश्वस्य दत्तं मुखशशिनि पदं कालिकालाञ्छनेन
न्यस्तं नव्यस्य भव्ये कुमुदवनभुवा द्राक्स्मितज्योत्स्नया च ॥७४॥

विश्वामित्रः । योगिन् जनक सखे दशरथ रामभद्रभ्रातृ-
त्वमति हि निर्व्यूढमिक्ष्वाकुकुललक्ष्मणो लक्ष्मणस्य ।

हेमप्रभा । सहि जाणइ पेक्ख देवरस्स दे भत्तुसरिसं
परक्कमं ता सुभणिदं अज्जेण णिद्दलिदसङ्करसरासणे जेट्ठे
कणिट्ठभादुणो समुचिदं जेव्व वैकुण्ठबाणासणविणासणम् ।
अण्णं कधेमि * ।

धणुविब्भमो मज्झणिविट्ठमुट्ठिणिबन्धरणन्तणिअदण्डम् ।
चलइ जेट्ठणिवडन्तचडुलगुणघग्घरुस्सूसम् ॥
बम्भण्डभण्डभिन्दणवाउलपडुरवगुणमिस्सो ।
मन्धिज्जइ पअडपओदमण्डणाडम्बरुड्डामरो ॥

मवणन्तघडिअगुणलच्छिणीविडकुडिलन्तकोडिकुण्डलिअम् ।
झणझणइ झत्ति पुणरुत्तिसज्जसिञ्जारवं चावम् ।
भुअजुअलदण्डमण्डलिअचण्डकोअण्डदण्डभङ्गभवो ।
पिण्डिज्जइ अह व बम्भण्डभण्डए कडु कडङ्कारो ॥
इअ वलइअसन्धिअकोट्टिअस्स धणुहो णरेन्दसदणेसु ।
रहुउलविक्कममेक्कं कहइ व्व विद्दलणटङ्कारो † ॥

जनकः ।

सखि जानकि प्रेक्षस्व देवरस्य ते भर्तृसदृशं पराक्रमं तत् सुभणि-
तमार्येण निर्दलितशङ्करशरासने ज्येष्ठे कनिष्ठभ्रातुः समुचितमेव वैकुण्ठ-
बाणासनविनाशनम् । अन्यत् कथयामि ।

धनुर्विभ्रमो मध्यनिविष्टमुष्टिनिबन्धरणन्निजदण्डम् ।
चलति ज्येष्ठनिपतच्चटुलगुणघर्घरोच्छोषम् ॥
ब्रह्माण्डभाण्डभेदनव्यापृतपटुरवगुणमिश्रः ।
सन्धीयते प्रकटपयोदमण्डनाडम्बरोड्डामरः ॥

हरधनुषि हठाधिरोपणेन
क्षितितनयापरिभावितः पुराऽभूत् ।
विहितमपरिभावितं पमात्व
पुनरिदमूर्मिलया मुरारिचापे ॥ ७५ ॥

इत्यमुद्धाम्य भोः संबन्धिन् दशरथ साऽपि वत्सा ममोर्मिला पारितोषिकं लक्ष्मणायास्तु ।

दशरथः । अस्तु ।

विश्वामित्रः । ते अपि माण्डवी श्रुतिकीर्त्तिश्च कुशध्वजदुहितरौ भरतशत्रुघ्नयोः स्ताम् ।

शतानन्दः । आ किमपि प्रियं नः ।

जामदग्न्यः । अति हि दशरथडिम्भो प्रगल्भेन तदेतदपरसमरसंरम्भक्षमां मिथिलोपकण्ठक्षमामवतराम इत्यवतरति

नेपथ्यं प्रति । अये माठर धनुर्धनुः ।

प्रविश्य शिष्यः । इदं धनुः ।

जामदग्न्यः । आदाय ।

दर्पान्मुक्तामृताद्धिक्षुमदनसुमनोदामसम्पर्कजात
स्मद्द्राणतूणीरागत्यनगुणमहारम्भनर्मायितानि ।
वर्तन्ता नव्यपत्युत्सुकविबुधवधूत्रासिकृतच्छेदखेद-
व्याधूतावित्तपाणिप्रविचलवलयास्फालकोलाहलानि ॥ ७६ ॥

ततश्च ।

श्रवणान्तर्घटितगुणार्पितनिबिडकोटिनाक्तकोटिकुण्डलितम् ।
झणझणायतं झटिति पुनर्झम्मझ्झमझ्झारवं चापम् ॥
भुजयुगलदण्डमण्डलितचण्डकोदण्डदण्डभङ्गभवः ।
पिण्डते अथ च ब्रह्माण्डभाण्डे कटु कटत्कारः ॥
इति वर्णयितमन्धि आकृष्टस्य धनुषो नरेन्द्रसदनेषु ।
रघुकुलविक्रममर्मकं कथयतीव विदलनटङ्कारः ॥

विधाय धरणीबन्धमरामममपलक्षणम् ।
अनृणो गुरुपादानां गन्ताऽस्मि निजमाश्रमम् ॥ ३१॥

रामः । भगवन् भार्गव ।

करस्थे मति कोदण्डे तूणीरस्थेषु पत्रिषु ।
विधत्स्व स्वयशोवीर्ये किं वीरस्य विकत्थया ॥ ३२ ॥

इति परिक्रम्य निष्क्रान्ताः सर्वे ।

॥ भार्गवभङ्गो नाम चतुर्थोऽङ्कः ॥

## ॥ अथ पञ्चमोऽङ्कः ॥

अतः परमुन्मत्तदशाननो भविष्यति ।

प्रविश्य मायामयः परिक्रम्य च सातिपम् । हहो निसर्गनिरर्गलचरितैकनिबन्धन विधे इदमुपालभ्यसे कः पुनः प्रकारस्तव यद्रत्नाकरेऽपि क्षारभावः सुधार्द्रीधितावपि लाञ्छनच्छाया पुलस्त्यापत्येऽपि मतिविपर्यासो यदादिष्टोऽस्मि राक्षसराजेन यदुत गच्छ त्वं रघुराजधानीमयोध्यां तत्र च चण्डीशकोदण्डनिर्दलनलब्धजानकीजनितगर्वगरिमा प्रथमदाशरथिर्वाच्यः ।

मैथिली यदि धनुर्लतो भवे-
त्तद्गुणात् प्रथमतस्त्वदीशिनः ।
राम विद्धि तव मोहमित्यमुं
विष्टपत्रयपतेर्ममास्तु सा ॥ १ ॥

किञ्च रे राजन्यपोत न श्रवणगोचरं गता राक्षसराजप्रति-

त्वयम् । कुर्वन्मोर्वीत्यादि पठति । भद्र मायामय स इत्यभि-
हितस्तामर्पयिष्यति सा तु तदर्पिता ।

अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय-
प्रह्वीभूतसुरासुराणि भवतो भूमेः सुता शृण्वती ।
पत्यौ द्विपकषायितेन मनसा स्निग्धा मयि स्यास्यति
स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ॥ २ ॥

विचिन्त्य । तत्कथमसौ निसर्गनिशाचरशत्रुर्वसिष्ठविश्वामित्रसनाथ इत्यमभिधातव्यो भवति सोऽयं कालकूटकवलनयहस्तादिदं यमदंष्ट्राङ्कुरशलाकाकर्षणं विभाव्य भवतु तदिदमसमञ्जसं चेष्टितं देवस्य नयज्ञानवते माल्यवते निवेदयामि स खल्वस्माकं मतिनौविप्लवे कर्णधारः । सपरिक्रममवलोक्य कथमयममात्यो माल्यवान् किमपि चिन्तयन् लेखहस्त आस्ते । विभाव्य तन्महाराजरावणदुर्नीतिपरम्परायत्तचित्तेनानेन भवितव्य न हि तरणिकिरणस्पर्शादन्यो व्याधिरिन्दीवरवनस्य । यखिनः परसौख्येन परदुःखेन दुःखिता जायन्ते कवयः काव्ये नयतन्त्रे च मन्त्रिणः ।

ततः प्रविशति यथानिर्दिष्टो माल्यवान् ।

माल्यवान् । मिथिलापुरीनिवासिना स्पशेन लेखः प्रहितस्तदमुं निरूपयामि । उन्मुच्य वाचयति । स्वस्ति लङ्कायां मतिमन्तं माल्यवन्तं विदेहनगरीतः कश्चित् सविनयमवबोधयति श्रेयोऽन्यत् ।

सीतास्वयंवरविधौ धनुरीश्वरस्य
वक्रीकृतं भुजबलेन बभञ्ज रामः ।

श्रुत्वा च तन्मुनिवृषा वृषकेतुशिष्यो
रोषाज्ज्वलन्निव पुरीं मिथिलामवाप ॥ ३ ॥

तदेतद्वो विदितमेव । इदमिदं निवेद्यते तत्र च शरनिकरवर्षणे क्षितितलनिघर्षणे सुभटवर्षणे कातरमनोधर्षणे परस्परप्रतिहतिमर्षणे कीलालपकर्षणे लोमहर्षणे च महारम्भे समरसंरम्भे ।

शम्भोः शिष्यं कुशिकमुनितः प्राप्तविद्योपविद्यः
तूणत्रं दशरथसुवामयणीः क्षत्रियाणाम् ।
वृद्धं बालश्च्यवनकुलजं भास्वतो वंशजन्मा
रामं रामो व्यजयत गतिच्छेदिना सायकेन ॥ ४ ॥

विचिन्त्य । महती वार्ता । विभाव्य । तस्यापि कलत्रे रात्तमराज्ञोऽनुरज्यत इति न सुखोदर्कं तर्कयामि ।

मायामयः । विलोक्य कथमधीतलेखस्तद्यावदुपसर्पामि । परिक्रम्य कनिष्ठमातामह मायामयोऽभिवादयते ।

माल्यवान् । अपि सुखं भद्रस्य महाराजरावणः किं कुरुते ।

मायामयः । यद्रपङ्कजासनसंभवान्वयः कुरुते ।

माल्यवान् । किमिव ।

मायामयः । यद्वादिष्टोऽस्मीति पठति ।

माल्यावान् । हसित्वा वृद्धबुद्धिर्हि प्रथमं पश्यति चरमं कार्यदुर्योगोऽवतरति यन्मया धूर्जटिधनुरधिक्षेपणतः प्रभृति मतिचक्षुषा दृष्टमेव यदुत दशकन्धरोऽनुधास्यति सीताहरणम् ।

मायामयः । ततस्ततः ।

माल्यवान् । ततश्च मया मन्दोदरीपितुर्मायागुरोर्मयस्य

प्रथमशिष्यो विशारदनामा यन्त्रकारः सबहुमानं नियुक्तः सो तास्प्रतिकृतिकरणाय विरचिता च सा तेन रावणोपच्छन्दनार्थम भिहितं च ।

सूत्रधारचलद्वाहुगात्रेयं यन्त्रजानकी ।
वक्त्रस्थसारिकालापा लङ्केन्द्रं वञ्चयिष्यति ॥ ५ ॥

मायामयः । सकौतुकम् । दृष्टा मातामहेनासौ कीदृशी यन्त्रजानकी ।

माल्यवान् । मायामय मया दृष्टा यादृशी सत्यजानकी तस्मादेव च सीताधात्रेयिकाऽपि कारिता सिन्दूरिका नाम । श्रुतिशिरसि परामृश्य तद्वयस्य मिथिलागमनं वीतविघ्नोपशमन तद्वचनादुचितं तदुपवर्णनं तेन च कृतकसंविधानेन निरन्तर- प्रेमोपार्जनं च सत्यापयितुमिदानीं निशाचरपतिर्वाच्यः । देव परपरिणीताऽपि सा ।

तव त्रिलोकीविजयैकजन्मभि-
र्गुणैरुदारैरनुरञ्जितापि सा ।
अनभ्यनुज्ञाजनितं करग्रहं
निषेधति हन्त नतेन मौलिना ॥ ६ ॥

मायामयः । अप्येवं प्रतिपत्स्यते दशाननः ।

माल्यवान् । प्रतिपत्स्यते वचसा न मनसा । उभौ हसतः ।

माल्यवान् । तदितिप्रतिपन्नवते दर्शनीय ।

मायामयः । एवं कृते किं कृतं भवति ।

माल्यवान् । शृणु यत्कृतं भवति सिताप्रतिकृतिदर्शनेन दशाननः प्रलोभितो भवति प्रलोभनेन च काललाभः काल लाभो हि नयविदां प्रयोगग्रामं कन्दलयति प्रयोगपारतन्त्रा च कार्यसिद्धिः ।

मायामयः । यथादिष्टमार्येण ।

माल्यवान् । प्रयोगक्षमश्च कालो विलम्बनीयः सत्यापनाय ।

मायामयः । यदादिशत्यार्यः ।

माल्यवान् । तद्गच्छ त्वं यथाभिमतसिद्धये । अहमपि मन्त्रिमण्डपिकामध्यासिष्य इति निष्क्रान्तौ । विष्कम्भकः ।

ततः प्रविशति रावणः प्रहस्तश्चामरधारिणी च ।

रावणः ।

न प्रीतिं परमेश्वरेऽपि शिरसां छेदेन होमेन वा
ज्यावल्लीनहनेन चामरपतौ द्वारार्गलासङ्गिनि ।
संयत्यलविलासतया न च कृते विश्वातिथौ पुष्पके
दृष्ट्वा जनकात्मजेत्यय यथा लङ्केश्वरो मोदते ॥ ७ ॥

विचिन्त्य हंहो हृदय न प्रस्मर्तव्यं यदावेदितममृतमयान्तरं मायामयेन यथा किल ।

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिसदसो वेषं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
संकल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥ ८ ॥

तत्प्रहस्त शीघ्रं प्रवेशय जानकीं न कालहरणक्षमाः प्रियजनसमागममहोत्सवाः ।

प्रहस्तः । निष्क्रम्य सीतासिन्दूरिकामायामयैः सह प्रविष्टः ।

मायामयः । इयं सा ।

रावणः । इयं सा विभाव्य ।

चक्षुः स्मेरमवारिजं कुवलयं वक्त्रस्य मित्रं विधु-
र्भ्रूलेखा स्मरतोरणं स्मितलवो लीलालतापल्लवः ।
उच्छिष्टं कलकण्ठवाक् च वचसां शङ्के तरङ्गीदृशः
सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥ ९ ॥

सिन्दूरिका । देव दसाणण चावारोहणदिअहम्मि ईसि दिट्ठाइं जाणई तुज्झ वअणाइं कुणइ एह्णिं दंसणपुणरुत्त-एआइं * ।

रावणः । भद्रे जानासि मदनपराधीनं जनमवस्थापयितुम् ।

सिन्दूरिका । अण्णधा वा रक्खसचक्कवत्तिणो विण्णवी-अदि † ।

रावणः । सोल्लासम् । तत्कथय येन युगपदनुभवामि विश्रान्तिधा म्नात्रामृतम् ।

सिन्दूरिका । इदं विण्णवीअदि ‡ । संस्कृतमाश्रित्य ।

यन्मुग्धामपि चन्द्रिकां गमयति प्रावृत्य चीनांशुकं
स्वस्मै कुप्यति पञ्चमं रचयते यत्कण्ठनालाय च ।
यच्चान्यत्परिहृत्य पक्ष्मलदृशस्त्वत्संकथास्वादरो
लोकस्तत्र निरर्गलं प्रलपति त्वं ब्रूहि किं मन्यसे १० ॥

रावणः । सहर्षम् । ततस्ततः ।

सिन्दूरिका । भूयः संस्कृतमाश्रित्य ।

---

* देव दशानन चापारोपणदिवसे ईषद्दृष्टानि जानकी तव वदनानि करोति इदानीं दर्शनपुनरुक्तयेयानि ।

† अन्यथा वा राक्षसचक्रवर्तिनो विज्ञाप्यते ।

‡ इदं विज्ञाप्यते ।

गतस्याः स्मरसंज्वरः करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनाऽपि जनेन दाहभयतः प्रोषप्रदः पाथसाम् ।
निर्वीर्यीकृतचन्दनौषधिविधौ तस्मिंस्तडत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्रजाम् ॥ ११ ॥

रावणः । अयि सीताधात्रेयिके तत्किमिति मैथिली मा प्रति माचीकृतवक्रमास्ते ।

धात्रेयी । णवाणुराओ एत्थ अवरज्झइ ण उण पिअसही जदो ।

वक्कं च वत्तितसं णिमेन्ति देहेण झत्ति वलिएण ।
पढमुण्णअवल्लहसङ्गमेण णडिआओ मुद्धमहिलाओ* ॥ १२ ॥

रावणः । किमुच्यते सीतायाः प्रियसखी खल्वसि केतकसम्पर्क्किसिचयमपि क्रिमप्यामोदाय । सीतां प्रति अयि स्वागत जनकराजजन्मनो जनस्य ।

सीता । सख्याः कर्णे एवमेवम् ।

सिन्दूरिका । लङ्केसर सहीसञ्चारिदक्खरा जाणई विण्णवेदि अज्ज साअदं मन्दोदरीदइददंसणेण† ।

रावणः । स्वगतम् । बाढं खिद्यति मयि वैदेही ईर्ष्यायितं हि स्त्रीणां प्रकाशकं प्रेमभरस्य । विहस्य प्रकाशम् । ननु जान-

---

* नवानुरागोऽत्रापराध्यति न पुनः प्रियसखी । यतः
वक्रं च वर्तितासं नियमयन्ति देहेन झटिति वलितेन ।
प्रथमोपनतवल्लभसङ्गमेन नटिता मुग्धमहिलाः ।

† लङ्केश्वर सखीसंचारिताक्षरा जानकी विज्ञापयति अद्य स्वागतं मन्दोदरीदयितदर्शनेन ।

कीदृग्यितदर्शनेनेति संप्रति वक्तव्यं भवति सहर्षम् । हंहो हृदय मनोरथानामुपरि वर्तसे यतः ।

प्रेमरम्यमुभयोः समं दिशोः
कामिनां यदिह चापपिच्छवत् ।
एकतस्तु न चकास्ति साध्वपि
श्यामपृष्ठमिव बर्हिणश्छदम् ॥ १३ ॥

सीता । सख्याः कर्णे एवमेवं भण ।

सिन्दूरिका । विसज्जिअलज्जाकण्ठबन्धं अप्पणा भण जदो सअं दूदी दूदीणं वरिट्ठा * ।

सीता । सवाक्स्तंभम् । जधा समत्थिदं लङ्केसरेण ता एत्थ वत्थुणि मए विरइदाइं कदिचि वअणाणि सुणीअदु ।

एक्कदिसारम्मेणावि अलं सिणेहेण सिहिदलच्छविणा ।
थुणिमो समदोवासं पेच्छं अ पिच्छोवमं पेम्मम् † ॥ १४ ॥

रावणः । तर्हि घनप्रेमनिबिडप्रेमा दशकण्ठो विजयते ।

सीता । सुदरं जअदि दसकण्ठो ।

समपेम्मरसं समरूवजोव्वणं समविलासवेअट्टम् ।

* विसर्जितलज्जाकण्ठबन्धमात्मना भण यतः स्वयं दूती दूतीनां वरिष्ठा ।

† यथा समर्थितं लङ्केश्वरेण । तदत्र वस्तुनि मया विरचितानि कतिचित् वचनानि श्रूयन्ताम् ।

एकदिक्रम्येणापि अलं स्नेहेन शिखिदलच्छविना ।
स्तुमः समद्विपार्श्वं प्रेक्ष्यं च पिच्छोपमं प्रेम ॥

समसुहदुःखं च जणं समपुण्णेहिं जणो लहइ ॥ * १५ ॥

रावणः । अहो सूक्तिपाको जनकसुतायाः । यतः ।

स्वादूनां प्रथमाय रूपविभवं मिथ्या मिथस्तन्वते
प्रेम्णा स्वम्नि मनोभवैकसुहृदे यस्य प्रसादादिह ।
दम्पत्योरनपेक्षितप्रियसखीचित्रप्रकारोक्तयो-
जायन्ते प्रहरान्तरेऽपि शतशः कोपप्रसादोदयाः ॥ १६ ॥

सीरध्वजात्मजे देवि तदिदं विज्ञाप्यसे ।

दुर्ग्लीलासु सकौतुकं यदि मनस्तन्मे दृशां विंशति-
र्निःसन्धौ परिरम्भणे रतिरथो दोर्मण्डली दृश्यताम् ।
प्रेमा चेत्परिचुम्बने दशमुखी वैदेहि सज्जा पुरः
पौलस्त्यस्य च राघवस्य च महत् पश्यापचारेऽन्तरम् ॥१७॥

अपिच जानकि लङ्कास्वामित्वे सति ।

मदनघभुजदण्डग्रामचण्डप्रताप-
प्रतिहतदयितानां खेचरीणां शिरःसु ।
तव करपुटचेष्टासज्जसेवाञ्जलीनां
चरणनखशिखाली शेखरीभावमेतु ॥ १८ ॥

सीता । आं दसाणण आ पुरिसविसेसपरिसकुक्करिसिणो-
ओ जेव्व पुरन्धीओ होन्ति † ।

रावणः । किञ्चिदुपसृत्य सुन्दरि किमद्यापि संदिह्यते ।
तदेहि ।

---

* सुतरां जयति दशकण्ठः ।
समप्रेमरसं समरूपयौवनं समविलासविशिष्टम् ।
समसुखदुःखं च जनं समपुण्यैर्जनो लभते ॥

† आं दशानन आं पुरुषविशेषपरिशङ्कोत्कर्षिण्य एव पुरन्ध्यो भवन्ति

लीलोद्याने यदि सुरपतेरस्ति वाञ्छा विहर्तुं
मेरोः शृङ्गे यदि च विसरत्तारकाचन्द्रदाम्नि ।
चण्डाभोगोद्गमरपुलकां देहि वैदेहि तन्मे
लङ्काभर्तुर्निबिडितकुचामादरादङ्कपालीम् ॥ १९ ॥

इति धारयति । सचमत्कारम् । कथमयमस्त्रेणः संस्पर्शः ।

रूपसंपदमरीषु नेदृशी
स्पर्श एष च दृषत्सहोदरः ।
तन्मतिर्मम विदेहजन्मनो
मां परीक्षितुमियं विज्ञानता ॥ २० ॥

पुनर्निरूप्य । अये सारिकाधिष्ठितवक्त्रं सीताप्रतिकृतिय न्त्रम् । अहो मतिमान् मायामयशक्तिर्नितोऽस्मि जनकराज-पुत्र्याः प्रतिकृतिसमर्पणेन तद्गच्छ मद्विनोदार्थमिमां भवनस्या कुरु । इति सीतासिन्दूरिके मायामयश्च निष्क्रान्ताः ।

रावणः । मदनाकूतमभिनीय प्रभञ्जनिके लीलोद्यानमार्ग-मादिश येन युगपदुपस्थितरात्रिंदिवे युगपदभ्युदितसूर्याचन्द्र-मसि युगपद्विभक्तसर्वर्तुनि तत्र सीताविरहदुःखितमात्मान विनोदयामि । भोः प्रहस्त तदितो गत्वा सन्निधीयतां शिशिरः पदार्थसार्थो विप्रकृष्यतां तदितरः ।

प्रहस्तः । परिक्रामन् ।

कस्त्वं चैत्र किमत्र पुष्पधनुषः का शक्तिरिन्दोरपि
व्यावर्तस्व वसन्तवात विरम त्वं काकलीपञ्चम ।
देवेऽस्मिन् दशकन्धरे भवत मा संरम्भगर्भक्रमाः
प्रागल्भी भवतां हरौ विजयिनौ तस्मिन्नहल्यापतौ ॥२१॥

निष्क्रान्तः । नेपथ्ये ।

राहो तर्जय भास्करं वरुण हे निर्वाप्यतां पावकः
सर्व्वे वारिमुचः समेत्य कुरुत ग्रीष्मस्य दर्पच्छिदम् ।
प्रालेयाचल चन्द्र दुग्धजलधे हेमन्तमन्दाकिनि
द्राग्देवस्य गृहानुपेत भवतां सेवाक्षणो वर्त्तते ॥ २२ ॥

प्रतीहारी । इदोइदो एदु देवो इमं लीलुज्जाणम् * ।

उभौ प्रविशतः ।

रावणः । भद्रे सकलर्त्तुसमलङ्कृतानुद्यानोद्देशान्द्रष्टुमिच्छामि ।

प्रतीहारी । ता इदोइदो एदु दसाणणदेवो † ।

रावणः । परिक्रामति ।

प्रतीहारी । एसो सलिलसोसदुरुद्धखिडदपुण्डरीअमण्डलो जलद्दासंदाणिदसुन्दरीदेहकन्दलसलीलपरिरम्भपज्जलिदका- मिजणजणुन्हो गिम्हो ‡ ।

रावणः । अये ग्रीष्मः । इह हि ।

यावद्बालं कमलकलिकाः प्रातरेव स्फुटन्ति
श्यामामध्ये विकचयति चेन्नीलमब्जं मृगाङ्कः ।
ग्रीष्मेऽमुष्मिन् जरठतरवौ रागिणां गात्रदेयाः
सद्यः शुष्कैरिव च सलिलैः संस्क्रियन्ते जलार्द्राः ॥ २३ ॥

---

* इतइत एतु देवः एतल्लीलोद्यानम् ।

† तदितइत एतु दशाननदेवः ।

‡ एष सलिलशोषदुरुद्धखिडतपुण्डरीकमण्डलो जलार्द्रासंदानितसुन्दरीदेहकन्दलसलीलपरिरम्भपज्ज्वलितकामिजनानुष्णो ग्रीष्मः ।

अपिच ।

कर्णे स्मेरं शिरीषं शिरसि विचकिलस्रग्लताः पाटलिन्यः
कण्ठे माला विशाला वपुषि च नलिनीमूलकाण्डाःकलापाः ।
सामोदं चन्दनाम्भः स्तनभुवि नयने म्लानमाञ्जिष्ठपृष्ठे
गात्रं लोलज्जलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ॥ २४॥

तापातिरेकमभिनीय ।

अयि शिशिरतरोपचारयोग्ये
द्वितयमिदं युगपच्च सह्यमेव ।
जरठितरविदीधितिश्च कालो
दयितजनेन समं च विप्रयोगः ॥ २५ ॥

तदग्रतो दर्शय ।

प्रतीहारी । पदान्तरे स्थित्वा एस णीसेसमिलिदबन्धवो भअपथिअमग्गो लङ्गलीकुसुमालिङ्गिदचङ्गत्तणो विआसजज्जरिज्जन्तजरठकेसरकुडुम्बडम्बरो कुसुमाउहविलासविक्कमक्कारम्भो वरिसारम्भो * ।

रावणः । अपि वर्षा ऋतुः । इह हि ।

पञ्चाषेोर्गुणघोषणाय गुणकस्त्रैलोक्यचिन्तातिथि
स्तूर्यं ताण्डवसंविधासु शिखिनां हंसप्रवासानकः ।
सूतिस्वस्त्ययनं विदूरवसुधारत्नाङ्कुराणामयं
गम्भीरस्तनितध्वनिर्जलमुचां रोदोगृहं गाहते ॥ २६ ॥

* एष निःशेषमिलितबान्धवो भयपथिकमार्गो लाङ्गलीकुसुमालिङ्गित सौन्दर्यो विकासजर्जरज्जरठकेसरकुटुम्बडम्बरः कुसुमायुधविलासविक्रमकारम्भो वर्षारम्भः ।

अपिच ।

संपिण्डीकृतजीर्णजीरककणश्रेणीश्रियः केशरान्
संनद्धं परितो निरन्तरदलद्रोणीनिवेशैस्त्रिभिः ।
प्रान्तभ्रान्तमधुव्रतीवलयितं स्वस्ति प्रियासंकटे
गन्धग्राह्यमबाह्यवृत्ति दलति क्रीडावने केतकम् ॥ २७॥

सोत्कण्ठम् ।

विरम जलदकाल स्वस्ति ते भद्र भूया-
दनुचितपरिवारस्त्वं तवैते तथा हि ।
विरहमविरहं वा नानुरुधन्ति मेघाः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ २८ ॥

तदग्रतो दर्शय ।

प्रभञ्जनिका पदान्तरे स्थित्वा एस कारन्दिश्रोदारसुन्दरो दलितनीलेन्दीवरवणी बन्धुअविच्छाइदमहिन्दकोअण्डो विरलीकदकेअईकुसुमवासप्पसरो मणोहरीकदणीसेससरओ सरओ * ॥

रावणः । अये शरत् ।

अवतरति घनात्ययः किमन्य-
द्विकसितकुङ्कुमकेसरावतंसः ।
परिसरपुलिनेषु निम्नगानां
सपदि समागतराजहंसयूथः ॥ २९ ॥

अपिच ।

* एषा कारन्दिकावतारसुन्दरी दलितनीलेन्दीवरवना बन्धकविच्छायितमहेन्द्रकोदण्डा विरलीकृतकेतकीकुसुमवासप्रसरा मनोहरीकृतनिःशेषसराः शरत् ।

कुर्वाणाः कैरवाणां मधुकणहरणं कूजितं रञ्जयन्तो
हंसालीकण्ठनालीष्वविकलकलमामोदमैत्रीपवित्राः ।
शेफालीफुल्लपालीपरिमलमिलनाश्चुम्बिताश्चञ्चरीकैः
कह्लाराह्लादकाराः कुवलयसुहृदः शारदा वान्ति वाताः ॥३०॥

साभिलाषम् ।

कुवलयमप्सु दिवीन्दुः सिन्धुषु पुलिनानि वाक्षु हंसीषु ।
इत्यवयवैर्विभक्तां सीतां दर्शयति शरदेषा ॥ ३१ ॥

तापमभिनीय सोऽयमपरः शरन्नामा ग्रीष्मः। तदयतो दर्शय।

प्रतीहारी । पदान्तरे स्थित्वा एस अणहिणन्दिदलीला-मज्जणुम्मज्जणो पसरिदणीरन्धलोद्धरअपुञ्जपिञ्जरिदादिम्मुहो अणियन्तिदकोञ्चीकुलकोलाहलाडम्बरकरविदसीमन्तो हेमन्तो * ।

रावणः । अये हेमन्तः ।

इह हि वहति कामं कामकोदण्डयष्टि-
द्रविडयुवतिगण्डश्यामिकां कोशकारः ।
चिरविरहितहंसीकण्ठकाण्डावपाण्डुः
स्फुरति च रुचिमत्ता पर्व्वणां पुण्ड्रकस्य ॥ ३२ ॥

अपिच ।

लम्पाकीनां किरन्तश्चिकुरविरचनां रल्लकांछासयन्त-
श्चुम्बन्तश्चन्द्रभागासलिलमविकलं भूर्जकाषैकचण्डाः ।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाह्लीकानां
कान्तालीकेलिकाराः परिचयितहिमं हैमना वान्ति वाताः ॥३३॥

* एष अभिनन्दितलीलामज्जनोन्मज्जनः प्रसारितनीरन्ध्रलोध्ररजःपुञ्जपिञ्जरितदिङ्मुखोऽनियन्त्रितक्रौञ्चीकुलकोलाहलाडम्बरकरम्बितसीमान्तो हेमन्तः ।

नापमभिनीय ।

सर्वाङ्गमदनोद्गाहः स कोऽपि मम वर्तते ।
अप्येष हन्त हेमन्तो यत्रोष्णसमयायते ॥ ३४ ॥

तदग्रतो दर्शय ।

प्रतीहारी । पदान्तरे स्थित्वा एस हिमुल्लसिदतरुणदम-
णग्रकन्दलो णिबिडपडन्ततुहिणकणुक्केरणिव्विग्घमहग्घिदप-
रिरम्भो अवदंसीकददतरुणतरणिकिरणुक्केरो पुराणदप्पणविच्छा-
अमअलञ्छणो णिज्जिदणीसेससिरी सिसिरो * ।

रावणः । अये शिशिरः । इह हि ।

वह्निः शक्तिर्जलमिव गता दर्शनाद्दाहवृत्ते-
र्नित्योत्संधौ नवमरुवके वर्तते पुष्पकार्यम् ।
शीतात्त्रासं दधदिव रविर्याति चाशां कृशानो-
र्नीहारार्तैरिव च दिवसाः सांप्रतं संकुचन्ति ॥ ३५ ॥

अपिच ।

चूडागर्भनिवेशि दामविकलं मुक्ताफलैर्भूषणं
स्त्रीणां कुङ्कुमपिच्छिलः स्तनभरो गूढोदरं मन्दिरम् ।
द्वित्राः स्थूलपटाः प्रसर्पदगुरुग्रामश्च धूमोद्गमः
संभोगाय भवन्ति चात्र कृतिनां दीप्रा विलासाप्तयः ॥ ३६ ॥

सखेदम् ।

नगरपरिघदीर्घा बाहुदण्डा ममैते
विजितकलभकुम्भा सा च तस्याः कुचश्रीः ॥

* एष हिमोल्लसिततरुणदमनककन्दलो निबिडनिपतत्तुहिनकणोत्क-
रैर्निर्विघ्नमहर्घितपरिरम्भोऽवतंसिततरणिकिरणोत्करः पुराणदर्पणविच्छा-
यमृगलाञ्छनो निर्जितनिःशेषश्रीः शिशिरः ।

तत्र शिशिरः समीरश्चैष नीहारभार-

स्त्वयमिति हि समेतं दुर्लभं रावणेन ॥ ३७ ॥

तदयतो दर्शय ।

प्रतीहारी । पदान्तरे स्थित्वा एस फलितफलिणीवणन्तरो णिरन्तरपल्लविदकङ्कल्लिलदादण्डो णिबिड्डग्गीद्कलकण्ठिकण्ठो कुडजगण्ठिजडिलपुणाअणिवहो भग्गकुसुमिदसोहञ्जणसाही मरणसंदेहारोविदसअलपविसन्तो वसन्तो * ।

रावणः । अये वसन्तः । इह हि ।

सूते संप्रति दुग्धमुग्धसुभगं पुष्पोद्गमं मल्लिका

बाह्लीकीदशनव्रणारुणदलैः पत्त्रैरशोकोऽर्चितः ।

भृङ्गीलङ्घितकोटि किंशुकमिदं किञ्चिद्विवृन्तायते

माञ्जिष्ठैर्मुकुलैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥ ३८ ॥

किञ्च ।

यदपि सर्वाभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते ।

सहकारमञ्जरीणां शिखोद्गमयन्त्ययः प्रथमे ॥ ३९ ॥

सस्पृहमिव सोत्कण्ठम् ! सीतावयवशोभासंवादात्तद्विगुणप्रणयिनी मे मधुलक्ष्मीः । तथा हि ।

लावण्याढ्यं मधूकान्यनुवदति दृशावुत्पलानां सनाभी

दन्तश्रीर्मल्लिकाभिः सह चरति सुहृत्सौरभं केसरस्य ।

वैदेह्याः पाटलानां सृजनयति रुचं किञ्च विम्बाधरोष्ठः

क्रीडाभिश्चित्र चैत्रस्त्वमसि तदिह मे वल्लभो दुर्लभश्च ॥ ४० ॥

* एष फलितफलिनीवनान्तरो निरन्तरपल्लवितकङ्कल्लिलतादण्डो निबिडोद्गीतकलकण्ठीकण्ठः कुटजग्रन्थिजटिलपुन्नागनिवहो भग्नकुसुमितशोभाञ्जनशाखी मरणसंदेहारोपितसकलप्रवसन् वसन्तः ।

प्रभञ्जनिका । अलं दूमिणा । उक्कण्ठाकारीणं धुरन्धरो एसो * ।

रावणः । उत्कण्ठामभिनीय ।

घर्मर्त्तो दमय वसन्तमुत्कवन्तं

संतापमभिनीय ।

द्राग्ग्रीष्मं स्थगयतु वार्मुचामनेहा ।

उत्कण्ठामभिनीय ।

त्वं वर्षाः शमय घनान्त

भूयः संतापमभिनीय ।

वारिदान्तं

हेमन्तः सह शिशिरेण हन्त हन्तु ॥४१॥

प्रभञ्जनिका । देव दिट्ठं सअलं रिदुचक्कवालं ता किम्पि मअरन्दमुच्चन्तबहलसीअरासारं सअं परिब्भमन्तज्जततालवित्तं णिग्गण्ठिदगण्ठिरकणअकेरिआकवललुद्दुगन्धहरिणणाहिको - मसुअन्धदसदिसं जाणइविरहवेदणाविणोदत्थाणत्थरअणसिलावउक्किअं अलङ्करेदु देओ † ।

रावणः । यदभिरुचितं भवत्यै परिक्रामितकेन सखेदम् ।

आत्तं श्रान्तमिदं विषण्णममुना नीचैरनेन स्थितं

कम्पोऽस्मिन्निह जृम्भिना प्रलपितं चैतेन तूष्णीमदः ।

* अलमनेन । उत्कण्ठाकारिणां धुरन्धर एषः

† देव दृष्टं सकलमृतुचक्रवालं तत्किमपि मकरन्दमुज्ज्वद्बहलसीकरासारां स्वयं परिभ्रमद्यन्त्रतालवृन्तां निर्ग्रन्थितग्रन्थिलकनककदलिकाकवललुब्धगन्धहरिणनाभिकाग्रसुगन्धदशदिशां जानकीविरहवेदनाविनोदस्थानस्थरत्नशिलाचतुष्किकामलङ्करोतु देवः ।

यतद्ध्यानपरं घनोऽत्र पुलकः स्वस्त च बाष्पैरितः
सीतादुर्विनयेन मे दशमुखो हा धिक्कथं वर्तताम् ॥ ४२॥

प्रभञ्जनिका । स्वगतं जधा मअणो आणवेदि । प्रवेशनाटितकेन अअं रअणचउक्किआकेलिपल्लङ्को ता उअविसदु देवो * ।

रावणः । उपविश्य सकोपम् ।

ता गाढं प्रहरस्व मा परिहरन्

सावज्ञम् ।

तां मां च मा वा वधीः

सानुकम्पम् ।

ता हन्तु परिकल्पितैरपि शरैर्मामेव वा ताडय ।

सानुरागम् ।

यद्वा मन्मथ तां च मां च युगपद्विध्यः समग्रायुधो
येनाहं जनकात्मजा च सदृशं प्रेम प्रपद्यामहे ॥ ४३ ॥

तदुद्रे सन्निधापय शिशिरोपचारसामग्रीं ।

प्रभञ्जनिका । देव देवदाओ आअदाओ तन्निवेदिदा दाव सिसिरोवआरसामग्गी सव्वा सण्णिहिदा ता किं णाम ण चिन्तिदावणदं लङ्केसरस्स † ।

रावणः । पुरोऽवलोक्य ।

* यथा मदन आज्ञापयति । अयं रत्नचतुष्किकाकेलिपल्यङ्कस्तदुपविशतु देवः ।

† देव देवता आगताः । तन्निवेदिता तावत् शिशिरोपचारसामग्री सर्वा संनिहिता तत् किं नाम न चिन्तितापनतं लङ्केश्वरस्य ।

सलिलकलशपाणिर्जायतां मन्दरस्त्री
तुहिनगिरिकुटुम्बिन्यस्तु नीहारहस्ता ।
मलयगिरिजाया चन्दनाम्भो निधत्तां
व्यजतु चमरदण्डैः किन्त्व नेपालपाली ॥ ४४ ॥

किञ्चित्तापमभिनीय । अलमलं भवतीभिः । पर्वतकलत्राणि यूयं युष्मदङ्गमङ्गः सुतरां तापाय । अन्यतोऽवलोक्य ।

यासां जन्म विवस्वतो भगवतश्चण्डाच्च मार्तण्डत-
श्चण्डांशोस्तगतश्च मन्मथमथम्नाः सन्तु हर्म्याद्बहिः ॥
याः सार्द्धं सुधया मम कमलया साकं मृगाङ्केण च
क्षीराब्धेरमराङ्गनाः समभवंस्तास्त्वन्तिके सन्तु मे ॥४५॥

ततश्च ।

रम्भा रम्भादलायैर्व्यजतु विहरतां दावदानेन हारा
तारा ताराधिपश्चारधितनु तनुता चन्दनस्यन्दमेकम् ।
प्रम्लोचा मोचपाकच्छविरवतु बिसन्यासभङ्ग्या ममाङ्गा-
न्यञ्जुद्राद्राग्दलार्द्रामुरसि च दधतां मेनका मे नका च ॥४६॥

पुनः सतापितकेन यासां मद्विजितवल्लभविरहिणीनां भवतीनां सन्निधिरपि संतापाय किं पुनरुपचारः । अन्यतोऽवलोक्य ।

पार्श्वं मुञ्चतु वेत्त्यनङ्गगृहिणी नाङ्गोपचारक्रियां
चण्डी चामरभूषणैर्व्यजतु मां द्वात्रिंशता पाणिभिः ।
भास्वत्पत्नि सरोरुहैरलमलं घर्मो यदेषां प्रियः
स्वान्दारानय सन्निधिं जलनिधे नद्यस्तवान्तःपुरम् ॥४७॥

सहर्षमवलोक्य ।

पादौ पीडय ताम्रपर्णि मुरले हस्ते हृदि स्थापयता
भोः कावेरि मृणालदाम वितर द्राङ्गमेदे वीजय ।
त्वं गोदावरि देहि चन्दनरसं हे तापि तापोष्मणः
शान्त्यर्थं सृज यन्त्रवारि विरही लङ्केश्वरः सीदति ॥ ४८ ॥

भूयःसतापमभिनीय गता अपि मदनाङ्कुरितमदङ्गमङ्गान्य-रिक्कुर्वन्ति । सक्रोधम । प्रभञ्जनिके मन्मथादुर्ललिताः खल्वेते ममाप्याज्ञां न गणयन्ति तदादिश्यन्तां किङ्कराः यदुत ।

कम्पाघातैः सुरभिरभितः मन्त्वरं ताडनीयो
गाढाक्रान्तं मलयमरुतः शृङ्खलादाम दत्त ।
कारागारे क्षिपत तरसा पञ्चमं रागराजं
चन्द्रं चूर्णीकुरुत च शिलापट्टके पिष्टबिम्बम ॥ ४९ ॥

द्वाराभिमुखमवलोक्य काः पुनरिमा द्वारि ।
प्रभञ्जनिका । वारुणी लक्ष्मी सरस्वती * ।
रावणः । सावज्ञम ।

दूरे तिष्ठतु वारुणी विरहिणा का नाम रत्नस्पृहा
लक्ष्मीः क्षीरमहोदधेरपि सुता स्त्रीत्वेव दाहे पटुः ।
वाचालासि सरस्वति व्रज गृहान्कः सूक्तिगोष्ठीक्षणो
यत्सत्यं न ममाद्य किञ्च न मुदे सीताप्रसादं विना ॥ ५० ॥

ऊर्ध्वमवलोक्य स्वगतं तथाप्येवं तावत् । प्रकाशम । हंहो विबुधापसदाः किमिदं येन शिशिरोपचारं कर्तुमुद्दिष्टा उष्णोपचारं रचयथ तर्हि विस्मृता वः प्रकृत्यमर्षणा

* वारुणी लक्ष्मी सरस्वती ।

दशकण्ठः । विचिन्त्य यद्वा प्रमादचिन्तकाः खल्वेते मम तत्र नेषु पदपदमभिधास्ये जलार्द्रामभिनीय ।

चन्द्र ज्योत्स्नाजलार्द्रामपनय यदिदं दह्यते देहदाहैः मेकमभिनीय ।

क्षीराब्धे दुग्धसेको मदनहुतभुजा पिण्डभाव बिभर्ति । नलिनोपचारमभिनीय ।

हेमाम्भोज स्रजस्ते विशद महते प्रोषपोषाय निष्ठाः हिमतापानुभवमभिनीय ।

प्रालेयाद्रे दवीयास्त्वव हिमदवथुर्दुष्ट गवाम्बुजेषु ॥ ५१ ॥

प्रभञ्जनिका । अहो मम्महवामदा अहो देवपडिउलदा ज दाणि रमणिज्जं वि उव्वेअणिज्जं सिसिरं वि उह्नं पडि-हाअदि * ।

रावणः । साभ्यर्थनावज्ञम् ।

शेषाहे त्वत्फणानां पिबतु दशशती मारुतं चैत्रमित्र
एहा जिह्वालता ते शशधरवपुषश्चन्द्रिकामेव लेढु ।
सङ्कोच पुष्पवन्तौ सपदि वितरतं पङ्कजेन्दीवराणां
त्वां याचे पञ्चबाणः पुरदहन पुनर्दह्यतामर्द्धदग्धः ॥५२॥

विचिन्त्य कथममी तापोत्कर्षेऽपि मम प्रत्यनीकप्रोत्साह-नेनापि न विरमन्ति तदेवं तावत् सातपम् ।

मास्म श्वाससटाः समीर चिरतः का कैतवी रावणे
धाराश्रुणि क्रशीकुरुष्व वरुण त्वत्कैलयः खल्विदम् ।

---

* अहो मन्मथवामता अहो दैवप्रतिकूलता यदिदानीं रमणीयमप्य द्वेजनीयं शिशिरमप्युष्णं प्रतिभाति ।

हहो पावक तापमल्पय तनौ त्वत्तो जगद्दाहिका
व्यावर्तस्व वसन्त हन्त मदनः स्याद्येन वीतायुधः ॥ ५३ ॥

स्वगतम् । तत्कः पुनरत्र प्रकारस्तापोपशमने । विचिन्त्य भवत्वेवं तावत् । प्रकाशम् ।

हे संवर्ताः कुरुत करकावृष्टिमिमां विकीर्णां
द्राक्स्तम्भय व्यजनचरितं धत्त कल्पान्तवाताः ।
क्रीडावापी भव हिमगिरे बुध्नबन्धाद्विलीनो
लङ्काभर्तुर्मनसिजशिखी नान्यथा शंशमीति ॥ ५४ ॥

सविशेषतापमूर्छ्यमवलोक्य किञ्च ।

सूत्रीकृतासु तरुणेन्दुकरच्छटासु
नक्षत्रबिम्बमयमौक्तिकगुम्फनाभिः ।
सीतावियोगविधुरस्य नवीनमार्गैः
सम्पाद्यतां दशमुखस्य विलासहारः ॥ ५५ ॥

अथवा किमेभिः क्षुद्रनक्षत्रमणिभिः । ततश्च ।

हस्तद्वयीनिबिडपीडितपार्वणेन्दु-
निस्यन्दितामृतरसेन निषिञ्च किञ्चित् ।
अङ्गानि मे स्मरमहाज्वरतापभाञ्जि
स्वस्मै स्वयं ननु भिषज्यति रात्तसेन्द्रः ॥ ५६ ॥

प्रभञ्जनिका । देवस्स देवेण वेज्जत्तणं पडिवण्णं मअल-
च्छणस्स उण का वत्ता * ।

रावणः । यद्वा किमनेनापि सीतावदनबन्धुना विधुरीकृ-
तेन चन्द्रं प्रति सकरुणम् ।

हंहो चन्द्र विमुच्यतां चरणयोः पर्यन्तसेवाक्रम-

* देवस्य देवेन वैद्यत्वं प्रतिपन्नं मृगलाञ्छनस्य पुनः का वार्ता।

स्त्वं पीयूषरसस्य रागशशिनः पात्रं तु लङ्केश्वरः ।
तन्मे वक्रपरम्परापरिचिताः प्रायं करिष्यन्त्यमी
मा कच्चिद्द्रवतोऽपि बिम्बवलये श्वासाश्चमत्कारिणः ॥५७॥

मदनवेदनामभिनीय ।

आः काम मय्यपि विमुञ्चसि नाम बाणान्
किं रावणो न विदितः शमितामरो यः ।
यद्वा स एष तव राघवपक्षपात-
स्त्वामसौ प्रतिकरिष्यति चन्द्रहासः ॥ ५८ ॥

प्रभञ्जनिका । विडजणमाणमणिवासिणं विब्भमचङ्कणुणगारविअं मणहरीकदकादम्बरीमदुम्माणं पञ्चबाणं विणासअन्तेण देवेण दिज्जदु णिहुअणविण्णाणविसेसाणं जलञ्जली* ॥

रावणः । विरम विहस्य मकरध्वज यन्निवारितेऽपि मां प्रहरसि तदवगतस्त्वयार्थः । यत्किल ।

किं करिष्यति कोपेन देवो मे दशकन्धरः ।
यदनङ्गतया नास्मि चन्द्रहासासिगोचरः ॥ ५९ ॥

तत्किं न जानासि रावणः सर्वङ्कषप्रभाव इति । विचिन्त्य यद्वा मत्प्रसाददुर्ललितोऽयं सर्वदा तपस्वी तदेकवारमपराधमस्य क्षमे । ऊर्ध्वमवलोक्य सहसोत्थाय च ।

हे पाकशासन विसर्जय वारिवाहां-
स्त्वं कार्तिकेय कुरु दूरतरं मयूरम् ।

* विटजनमानसनिवासिनं विभ्रमपाङ्गुण्यगौरवितं मनोहरीकृतकादम्बरीमदोन्मानं पञ्चबाणं विनाशयता देवेन दीयतां निधुवनविज्ञानविशेषाणां जलाञ्जलिः ।

हे शक्र संवृणु निजानि तडिन्महांसि
लङ्केश्वरो विरहितः सहते न वर्षाः ॥ ६० ॥

अग्रतोऽवलोक्य के पुनरमी ।

प्रभञ्जनिका । देव सेवागदा भुअङ्गमा अत्ताणं दंसअन्ति*

रावणः ।

हे पन्नगाः किमपि रोषविषस्वरूप-
रूपं तु वेणिमनुवाञ्छति वल्लभायाः ।
तेनैष दुर्द्धरतरस्त्वरते कृपाणो
युष्मानियं नमति तेन च मौलिमाला ॥ ६१ ॥

परिक्रामन्नग्रतोऽवलोक्य कथमियं कोकिलकमलिनी । सहर्षम् ।

नवमरकतपात्रीरोचिषः पत्रपङ्क्ती-
स्तव कमलिनि वन्दे चक्षुषोश्चार्पयामि ।
यदिह नयनलेह्यं दोलन्तामध्यरोध-
स्तनतटपरिणाहं सूचयन्ति प्रियायाः ॥ ६२ ॥

अन्यतोऽवलोक्य अये कथममी ब्रह्मविमानहंसाः सीता-विभ्रमगमनमनुकृत्य परिक्रामन्तो मह्यमात्मानं रोचयन्ते । साक्षेपम् । आः क्षीरजलपृथक्करणपाण्डित्यसगर्विताः सितशकुनयः कियं लुण्टाकता । विचिन्त्य भवतु नलिनासनमेव तावदभिदधे । अञ्जलिं बद्ध्वा ।

हंहो पितामह निषेध विमानहंसान्
लीलागतं मृगदृशस्त इमे हरन्ति ।
नोचेन्ममोपदिश तेषु यदाचरामि
त्वं येन दण्डनविधेः प्रथमप्रणेता ॥ ६३ ॥

---

* देव सेवागता भुजङ्गमा आत्मानं दर्शयन्ति ।

विलोक्य कथं सत्वरं मामवलोक्य स्थितास्तन्मन्ये मद्भ-याद्गतिस्तेयं परित्यक्तमेतैः । तत्र प्रत्यादिशामि । यदित्थं कथयन्ति सकृद्विहितदोषं दोषेभ्यो विनिवर्त्तमानं साधुवद्वी-क्षेत । अन्यतोऽवलोक्य रे पुरन्दर मम पुरतः सीतामालिङ्गसि नन्वेयमहल्यामुनिपत्नी चन्द्रहास इतइत एव बिडौजसि समा-दिश्यमे ।

प्रभञ्जनिका । पुरतः स्थित्वा देव कहिं इह महेन्दो कहिं वा सीदा * ।

रावणः । निपुणं निरूप्य हन्तहन्त सादृश्याद्विप्रलब्धो-ऽस्मि । इन्दीवराकारोऽय न विकस्वरलोचनः शचीरमणः । जलचन्द्रप्रतिमैषा तरङ्गदीर्घा न वैदेही ।

प्रभञ्जनिका । स्वगतम् । अण्णदो दंसिअ अवक्खिवामि से हिअआवक्कवम् । प्रकाशम् । इदोइदो पेक्खदु दसाणणो देवो † ।

रावणः । साक्षेपम् । आः पन्नगाः प्रियतमामादाय पातालं प्रविशथ वैनतेयवैनतेय निवारयैतान् यद्वा ममापि रावणस्य सहायापेक्षा । तदेषोऽहमेव परिसर्पामि । इति सरभसं ।

प्रभञ्जनिका । पादयोर्निपत्य कहिं एत्थ पण्णआ कहिं एत्थ जाणई ‡ ।

रावणः । निरूप्य यथाह भवती ।

* देव क्वेह महेन्द्रः क्व वा सीता

† अन्यतो दर्शयित्वावक्षिपाम्यस्य हृदयावक्षेपम् । इतइतः प्रेक्षतां दशाननो देवः ।

‡ क्वात्र पन्नगाः क्वात्र जानकी

अयं तोयावर्तो बत न विततं नागवसते-
रयं वीचीच्छेदो न खलु फणिनामेष निवहः ।
इयं भृङ्गश्रेणी न पुनरलकानां विरचना
इदं हेमाम्भोजं विकसति न सीतामुखमिदम् ॥ ६४ ॥

विचिन्त्य तदितः स्थलकमलिनीमतो विलासकरिमृगपति
ज्ञातांश्च नीलोद्यानैकदेशान्निरूपयामि परिक्रामितकेनात्र
लोक्य ।

सारङ्ग दृष्टिलसिते कलभाषिते च
पुंस्कोकिल स्मितसरोरुह सौरभे च ।
दिव्येभ विभ्रमगतौ च सदैव यस्याः
शिष्याः स्थ तां कथयत स्वगुरुं प्रियां मे ॥ ६५ ॥

विलोक्य कथममी मद्भयात्सर्वेऽप्यप्रतिपत्तिमुखास्तिष्ठन्ति
केवलमैरावतो मदवशात्कण्ठगर्जं करोति जाने प्रेयस्या याव
दपहृतमनेन भवत्वेनमेव तावदाभाषे ।

कुम्भाभ्यां कुचसपट्नविभवो हस्तेन लीलागतं
केलीचङ्क्रमितेन गण्डतलयोः कान्तिश्च दन्तद्युता ।
स्वःस्तम्बेरमनाथ पक्ष्मलदृशो यस्यास्त्वयेदं हृतं
तां मे दर्शय येन संमदवता स्तेयं मया क्षम्यते ॥ ६६ ॥

विलोक्य कथं मामनादृत्य निजप्रियामभ्रमुं प्रति प्रवृत्तः
साक्षेपम् । रेरे कात्यायनीकेसरिकिशोर शिक्षयैनम् । विचिन्त्य
अथवा शिक्षितचर एवायम् ।

कण्ठार्पितमहापाशश्चरणार्पितशृङ्खलः ।
बध्यते व्युकरी द्वारि कोऽस्यान्यो दण्डडम्बरः ॥ ६७ ॥

अन्यतोऽवलोक्य कथमद्यापर्वणि चन्द्रग्रहणं वसुमतीवर्ति-नदेनदद्भुतम् ।

प्रभञ्जनिका । देव किमणपक्कदिअसेसु चन्दग्गहणंति झति जुत्तं ण पडिहाअदि * ।

रावणः । प्रभञ्जनिके यथान्थ सम्यग्विलोक्य च किञ्चि-द्विहस्य च ।

जितनवनवनीत धाम नो चन्द्रिकेय
स्मितकुवलयनालि चक्षुषो नो कलङ्कः ।
सरलभुजगभङ्गिर्वेणिरेषा न राहु-
र्मुखमिदमिह तस्या नैष राकामृगाङ्कः ॥ ६८ ॥

विचिन्त्य क्व पुनरत्र सीतावदनेन्दुरपि विमृश्य ज्ञातं ध्याना-नीतया सीतया मुहुर्मुहुर्विप्रलभ्यामहे । अन्यतोऽवलोक्य । अय विलासकुरङ्गाग्रणीः समीरणसारङ्गः । विचिन्त्य कथं जान-कीनयनलीलामलिम्लुचः । साक्षेपम् ।

शास्योऽसि मारुत हृते त्वन्मृगेण तदीक्षणे ।
स्वामी भृत्यापराधेन दण्डनीय इति स्थितिः ॥ ६९ ॥

पुरतोऽवलोक्य सरीसृपचक्रवर्तिन् वासुके गण्डूषयैनं यद्वा समानपरिग्रहदोषं चन्द्रमपि तावदाक्षिपामि ।

रजनीश विमुञ्च लाञ्छनैणं
दयितालोकन हृन्ममैष वध्यः ।
यदि चास्य परिग्रहं दधीथा-
स्तदितो मूढ दशाननं न पश्येः ॥ ७० ॥

---

* देव कृष्णपक्षदिवसेषु चन्द्रग्रहणमिति झटिति युक्तं न प्रतिभाति ।

सैंहिकेयसैंहिकेय कवलीकुरु कुरङ्गलाञ्छनम् ।

प्रभञ्जनिका । केलीकन्दोद्भवणविमद्दवणं परिपिक्क-पुरपिण्डपण्डुरञ्चं मअलञ्छणमुच्छिन्दाणेण देवेण माणंसिणीं माणमुद्दाविद्दावणे किं कादव्वम् * ।

रावणः । भवति प्रभञ्जनिके सर्वदैव प्रमादपात्र ममैषः तदेकवारं तावच्छिक्षयामि ।

हे चन्द्रमस्त्यज मृगं कुरु रावणाज्ञा
तत्कारिणस्तव गुणाद्भुतयेन योगः ।
तन्मैथिलीनयनकान्त्यपहारदोषा
लुप्तश्चते भवति बिम्बमलाञ्छनं च ॥ ८५ ॥

पुरतोऽवलोक्य जानकिजानकि किमिव मायाऽपकृतं यद वगुण्ठ्य स्थितासि । यद्वा प्रमादरसोन्मुखमनसोऽपि विलास हेतोः कामिन्यः कुप्यन्ते तत्प्रसादयामीति प्रणमति ।

प्रभञ्जनिका । का पुण एत्थ जाणई † ।

रावणः । इयमियम् ।

प्रभञ्जनिका । कहिं सा ‡ ।

रावणः । हस्तं व्यापारयन् हा हतोऽस्मि मन्दभाग्यः ।

इयं लता कापि निरन्तरच्छदा
प्रसूनगन्धाहृतषट्पदावलिः ।

---

* केलीकमलवनविकासितवर्णं परिपक्वपर्पूरपिण्डपाण्डुरं मृगलाञ्छन मुच्छिन्दता देवेन मनस्विनीमानमुद्राविद्रावणे किं कर्तव्यम् ।

† का पुनरत्र जानकी ।

‡ क्व सा ।

अधो दधाना हरितं नवांशुकं
न मैथिली नीलदुकूलगुण्ठना ॥ ७२ ॥

अन्यतोऽप्यवलोक्य कथममी चकोराः शकुन्तयः । अहो नाश्चरितं चित्रमेतेषामन्यविहङ्गमवर्गासाधारणं यत्किल चन्द्रिकाचान्तिचातुर्यम् । तान् प्रति ।

अयि पिबत चकोराः कृत्स्नमुन्नामिकण्ठ-
क्रमकवलनचञ्चच्चन्द्रकान्तीरमिश्राः ।
विरहविधुरितानां जीवितत्राणहेतो-
र्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ ७३ ॥

किञ्च रे हतशकुनयः ।

वैतामुखश्चरितविभ्रमसंविधानं
नूनं न गोचरमभूद्रयितानने वः ।
तत्कान्तिसम्पदमवाप्स्यथ चेच्चकोराः
पानोत्सवं किमकरिष्यत चन्द्रिकासु ॥ ७४ ॥

प्रविश्य पटाक्षेपेण छिन्ननासा कृतावगुण्ठना शूर्पणखा साक्रन्दं पादयोर्निपत्य अज्ज एक्कमादुक पेक्ख तक्खअचूडामणी उप्पाडिदा वडवाणलजालाकलप्पअं घुन्नलिदं दसकण्ठकणिट्ठबहिणीए अच्चाहिदम् * । इति शिर उद्घाट्य दर्शयति ।

रावणः । सक्रोधम् ।

पौलोम्याप्यत्र वीरे समरभुवि भयाद्याचिते भर्तृभिक्षां
वैदेहीदत्तशौर्यव्रतमदनजिते यद्यभून्मय्यवज्ञा ।

* आर्यैकमातृक प्रेक्षस्व तक्षकचूडामणिरुत्पाटितो वडवानलज्वालाकलापकं चूर्णितं दशकण्ठकनिष्ठभगिन्या अत्याहितम् ।

तत्किं कस्यापि तस्य त्वयि विधुरमिदं कुर्वतः कर्म भग्न-
स्वर्गेभोद्दामदानस्रुतिरयमपि मे विस्मृतश्चन्द्रहासः ॥१५॥

तद्रूत्से कथय ।

परस्परविघट्टनामुखरदन्तपत्रान्तर-
प्रवृत्तरसनं महाकहकहारवैर्भैरवैः ।
इदं मम महोद्भटं सभयशेषवक्त्रेक्षित
प्रचण्डकुटिलोत्कटभ्रुकुटि भुग्नभालं मुखम् ॥ १६ ॥

शूर्पणखा । स्वगतम् । रहुउलरात्रहाणीपरिट्ठिदे रामल
क्खवणे अहिसारअन्ती अणिच्छन्तेहिं तेहिं बलक्कारकम्मेण
एत्थावत्था कदत्ति कधं जेट्ठभादुणो कधइस्सं ता एव्व दाव
प्रकाशम् । देव अओज्झाणअरीए रामेत्ति खत्तिअकुमारो अत्थि *।

रावणः । स्वगम् । अस्ति यः सीतायाः पतिः । प्रकाशम्
किं तस्य ।

शूर्पणखा । तस्स भरिआ भुवणेक्कसुन्दरी सीदा णाम †

रावणः । सावज्ञमात्मगतम् । त्रिभुवनसुन्दरीतिवक्तव्ये भु-
वनसुन्दरीत्याह । प्रकाशम् । ततः किं तस्याः ।

शूर्पणखा । लङ्केसरस्स समुचिदत्ति अपहरन्ती तेहि कवा-
लघट्टजोग्गा कदम्हि ‡ ।

---

* रघुकुलराजधानीपरिस्थितौ रामलक्ष्मणावभिसरन्ती अनिच्छद्भ्यां
ताभ्यां बलात्कारकर्मणेदृशावस्था कृतेति कथं ज्येष्ठभ्रातुः कथयिष्यामि ।
तदेवं तावत् देव अयोध्यानगर्यां राम इति क्षत्रियकुमारोऽस्ति ।

† तस्य भार्या भुवनैकसुन्दरी सीता नाम ।

‡ लङ्केश्वरस्य समुचितेति अपहरन्ती ताभ्यां कापालिकव्रतयोग्या
कृतास्मि ।

रावणः । अये दाशरथिविनाशाय कारणद्वयी संपन्ना सीता शूर्पणखा च । प्रकाशम् । वत्से मा विषीद निर्जितजामदग्न्य-शस्त्रव्यापार एवासौ ततश्च ।

त्रुट्यद्वाद्वृगण्डखण्डोड्डमरपुरुपतत्कण्ठकोष्ठप्रकोष्ठं
स्फारस्फिक्पृष्ठपीठीहठदलितशिराकन्धराकाण्डखण्डम्।
सस्तम्भ त्वड्डिम्भं चटदितिविचटन्मुण्डपिण्डं प्रचण्ड-
श्चण्डांशोच्चण्डदंष्ट्राङ्ककच इव दृढं चन्द्रहासस्तृणेतु॥७७॥

इति परिक्रम्य निष्क्रान्तः ।

॥ उन्मत्तदशाननो नाम पञ्चमोऽङ्कः ॥

---

## ॥ अथ षष्ठोऽङ्कः ॥

अतः परं निर्दोषदशरथो भविष्यति ।

ततः प्रविशतः शूर्पणखामायामयौ ।

शूर्पणखा । अज्ज अहिण्णादं तए मादामहस्स तक्काल-मन्तिदं जधा किल रामे सुबद्धवेरा सुप्पणहा कुलउत्तओ माआमओ ता दुवेवि एदे कज्जसिद्धीए कारणेत्ति णिउत्ता * ।

मायामयः । बुद्धिप्रकर्षं प्रति किमुपवर्ण्यते तत्रभवतो माल्यवतः । किमभीष्टं चन्द्रमसः कुमुद्वतीवल्लभस्येति ।

* आर्य अभिज्ञातं त्वया मातामहस्य तत्कालमन्त्रितं यथा किल रामे सुबद्धवैरा शूर्पणखा कुलपुत्रको मायामयौ द्वावप्येतौ कार्यसिद्धेः कारणे इति नियुक्तौ ।

नीतितन्त्रे द्वयं दृष्टं सिद्धये कृत्यवस्तुनः ।
समानः कार्ययोगश्च प्रभुशक्तिश्च निश्चला ॥ १ ॥

तदेहि दशाननमातामहमेवोपतिष्ठावहे ।

शूर्पणखा । एवं करस्व * । परिक्रम्यावलोकितकेन ।

मायामयः ।

नैर्ऋताधिपकार्याणामुपायोपायकर्मणि ।
आर्यो यन्माल्यवानास्तेऽव्यस्तलक्षेण चक्षुषा ॥ २ ॥

ततः प्रविशति माल्यवान् ।

माल्यवान् । स्मृतिमभिनीय शूर्पणखानिकारदर्शनसमुत्ते-जितोऽपि दशकण्ठो रघुराजधानीयात्रातो निवर्तितस्तावदि-दमुपदिश्य चारकैर्यदुत देवस्य वैदेह्या संदिष्टं यथा ।

स्वयं मया प्रेमपरीक्षणाय
प्रवर्तितः स्वाकृतियन्त्रयोगः ।
अथाहमेवागणितैरहोभि
र्दशाननान्तं नियतं प्रवत्स्ये ॥ ३ ॥

विचिन्त्य ।

इत्थं मिथ्या विप्रलब्धोऽपि देव-
स्त्यक्त्वावेशं सोदरीवैकृतेऽपि ।
जातः सीतासङ्गमायत्तचित्तो
न्यक्कृत्यान्यज्जृम्भते मन्मथाज्ञा ॥ ४ ॥

स्मृतिनाटितकेन । न जाने किं वृत्तं वा कैकेयीदशरथयोः ।
उपसर्पितकेन ।

---

* एवं कुर्मः ।

मायामयः । जयतिजयत्यार्यः ।

शूर्पणखा । जअदुजअदु कणिट्ठमादामहो * ।

माल्यवान् । अथ तत्र किं वृत्तम् ।

मायामयः । यथादिष्टमार्येण ।

माल्यवान् । सहर्षं तद्विस्तारतः कथ्यताम् ।

मायामयः । अथैकदा दयितस्नेहमय्या तया सममसुरानीकविजयाय पूरितसुहृन्मनोरथे दशरथे त्रिविष्टपतिलकभूतं पुरुहूतं प्रभाववति समुपस्थितवति तद्रूपधारिणौ कुवलयदलाभिराम राम सपदि छलयितुमयोध्यां शूर्पणखाऽहं च प्राप्तवन्तौ । विहितजनरञ्जनेन वृन्दारकबन्दिव्यञ्जनेन गीतसम्भृतसहस्रेण निशाचरेण ।

दैत्यग्रामं रणपरिगमे कृत्वता नामशेषं
येन न्यस्ता दिशिदिशि यशःकन्दलानां प्ररोहाः ।
हासज्योत्स्नां सुरपतिवधूवक्त्रचन्द्राय दत्त्वा
सार्द्धं दारैर्दशरथनृपः स्वां पुरीं सोऽयमेति ॥ ५ ॥

माल्यवान् । ततस्ततः ।

शूर्पणखा । तदो तस्स वअणप्पसरणमाअण्णिअ सव्वदो वज्जन्तणिरवज्जतूरं गाअन्तगन्धव्वजणचुम्बिअणच्चन्तणटीमत्थ उब्भिज्जन्तविअडद्धअवडाआयुगं तोरणणिबज्झन्तचित्तवन्दणमालअं सच्छरत्थाचत्तरचउप्पहपइण्णपिट्ठातअचुण्ण तं पुरं चउद्दिसं आसि † ।

---

* जयतुजयतु कनिष्ठमातामहः ।

† ततस्तस्य वचनप्रसरणमाकर्ण्य सर्वतो वाद्यमाननिरवद्यतूर्यं गायद्गन्धर्वजनचुम्बितनृत्यन्नटीसार्थं उद्भिद्यमानविकटध्वजपताकायुगं तोरणनिबध्यमानचित्रचन्दनमालकं स्वच्छरथ्याचत्वरचतुष्पथप्रकीर्णपिष्टातकचूर्णं तत् पुरं चतुर्दिशमासीत् ।

माल्यवान् । ततस्ततः ।

मायामयः । ततश्च यावत् मायाकैकेयी शूर्पणखा माया-दशरथो मायामयश्च यथास्थानमुपविष्टौ तावत्कैकेय्याः प्रियसखी मन्थरा नाम तद्रूपधारिणी शूर्पणखापरिचारिकेव तदा मामुपेत्योक्तवती ।

माल्यवान् । किम् ।

मायामयः । इदम् ।

यत्त्वयाऽस्या महाराज प्रतिपन्नं वरद्वयम् ।
व्यामयात्रामहचरी कैकेयी याचतेऽद्य तत् ॥ ६ ॥

यथाभिहितं किं तत् । उक्तं च मन्थरया ।

वरेणैकेन लभतां रघुराज्यं सुतो मम ।
चतुर्दश समा रामो वने वन्येन तिष्ठतु ॥ ७ ॥

माल्यवान् । सहर्षम् । ततस्ततः ।

शूर्पणखा । विहस्य सुदसच्चदसरहेण वि माआमएण तधा करुणं विरोइदु पउत्तं जधा जदि णाम तरुणो परं ण रोव-दिदा गावगण्ठोणं परं जदि ण दलइ हिअअम् * ॥

माल्यवान् । विहस्य भद्र मायामय त्वमेव शेषं कथय कविमुखादिव शृणुमः ।

मायामयः । विहस्य ।

तथा मया प्रस्तुतमार्य रोदितुं
निबद्धधाराप्रसरेण चक्षुषा ।

* श्रुतमत्यदशरथेनापि मायामयेन तथा करुणं प्ररोदितुं प्रवृत्त यथा यदि नाम तरवः परं न रोदिताः । ग्रावग्रन्थीनां परं यदि न दलति हृदयम् ।

स्थिता यथा स्वर्गनदीव दक्षिणे
यथा च वामे यमुनेव वत्तुपि ॥ ८ ॥

माल्यवान्। किं हि दुष्करं स्वामिभक्तेः किमसाध्यं वैदग्ध्यस्य ततस्ततः।

मायामयः। तदिति प्रतिपन्नवता मया निर्वासितो राजपुत्रः प्रवृत्तश्च गन्तुं वनाय।

शूर्पणखा। लक्खणजाणईमेत्तपरिवारस्स से किदा जत्ता *।

मायामयः। आर्ये किमपि द्विषतामुदात्तजनचरितमाश्चर्यं पश्य।

क्रमक्रम किमपि गतसजातिरेका
तत्रापि कार्यपरतेति मयि प्रकर्षः।
रामेण तु प्रथमता पितुराज्ञयैव
आरण्यसामहमपीह कृता रसज्ञः ॥ ९ ॥

अपिच। दशकण्ठमातामह।

अभ्युज्झता निजगृहान् सुखसारवन्धून्
कान्तारवासमनसः पितृशासनेन।
रामस्य सा स्थितवती मुखमेत्य लक्ष्मीः
पद्मस्य या शरदि या च निशाकरस्य ॥ १० ॥

शूर्पणखा। तदो अस्से तं पविसाविअ सव्वदसरहागमणासङ्किणी दइदि जणह्वा भविअ किं हविस्सदित्ति जाणिदुं तक्खणं तहिं जेव्व ट्ठिआ अह तत्थ पउण्णा पोरलोअस्स

* लक्ष्मणजानकीमात्रपरिवारस्यास्य कृता यात्रा।

हलहवुल्लावा जधा केहिं वि किरकेकईदमरहृहवधारीहिं क-लिदो रामभट्टोत्ति * ।

माल्यवान् ततस्ततः ।

मायामयः । ततश्च वामदेवप्रभृतिभिर्यथावृत्तमभिधाय म-पादोपवहं वारितोऽपि तदिदमभिधाय स्थितः ।

मया मूर्ध्नि प्रह्वे पितुरिति धृतं शासनमिदं
स यक्षो रक्षो वा भवतु भगवान् वा रघुपतिः ।
निवर्तिष्ये सोऽहं भरतकृतरक्षां निजपुरीं
समाः सम्यङ्गीत्वा वनभुवि चतस्रश्च दश च ॥ ५१ ॥

कार्यशेषनिष्पत्तये यथोचितं मातामह एव जानातीति निष्क्रान्ताः । विष्कम्भकः ।

ततः प्रविशति मातलिसारथिना रथेन कैकेय्या सह दशरथः ।

दशरथः । आर्य मातले कियद्दूरमद्यापि रघुराजधानी ।

मातलिः । य एष दृश्यते सरयूसरितः स्रोतसा परिक्षिप्तप्राकारो धरणितलैकदेशः सात्वियमयोध्या । रथवेगनाटितकेन ।

कैकेयी । पणमामि भअवदिं सरऊं जा पुव्वं दीसमाणा णअणपेऊसगण्डूसकवल करेन्ती आसि सा संपद हलाहलकवडपडिरूआ पडिहाअदि किं पुण मे अओज्झादंसणे वि अकारणपज्जाउलं हिअअं ता जदि वच्छाणं रामभद्दभरदलक्खण-

---

* ततो वयं तं प्रवास्य सत्यदशरथागमनशङ्किनो झटिति जनरूपा भूत्वा किं भविष्यतीति ज्ञातुं तत्क्षणं तत्रैव स्थिताः । अथ तत्र प्रवृत्ताः पौरजनस्य मन्दोल्लापा यत् काभ्यामपि कृतकैकयीदशरथरूपधारिभ्यां छलितो रामभद्र इति ।

मणुस्साणं वधूणं च सीदामण्डवीउम्मिलासुदकित्तीणं दंसणेण णिव्वासइस्सदि * ।

दशरथः । अयि कैकेयि ।

गतक्लान्तिर्विचरत्तुरगं विश्रान्तवैतालिक-
श्लाघाश्लोकमगुञ्जमञ्जुमुरजं विध्वस्तगीतध्वनि ।
व्यावृत्ताध्ययनं निवृत्तसुकविक्रीडासमस्यं नम-
द्विद्वद्वादकथं कथं पुनरिदं मौनव्रते वर्त्तते ॥ १२ ॥

अवतरणनाटितकेन ।

मातलिः । सत्यं महाराज सम्भावयस्व सदनमहमपि नि-
विडौजस विडौजसमुपतिष्ठामीति निष्क्रान्तः ।

परिक्रामितकेन दशरथः । कः कोऽत्र भोः ।

नेपथ्ये अयमहं काम्पिल्लः सौविदल्लः ।

दशरथः । आहूय सुमन्त्रवामदेवौ ।

प्रविश्य वामदेवः । स्वस्ति महाराजदशरथाय देव सन्नि-
हितोऽत्रसुमन्त्रः ।

दशरथः । अनाकर्णितकेन गतक्लान्तमित्यादि पठति ।

वामदेवः । सास्रं स्वगतं च ।

हे मद्वाणि निजां विमुञ्च वसतिं द्रागेहि यात्रां बहिः
राजानं प्रति ।

देव स्तम्भय चेतनावचनयोरप्येति शुष्काशनिः ।

* प्रणमामि भवतीं सरयूं या पूर्वं दृश्यमाना नयनपीयूषगण्डूषकवलं कुर्वन्ती आसीत् सा साम्प्रतं हालाहलकवलप्रतिरूपा प्रतिभाति । किं पुनर्मेऽयोध्यादर्शनेऽप्यकारणपर्याकुलं हृदयं तत् यदि वत्सानां रामभद्रभरतलक्ष्मणशत्रुघ्नानां वधूनां च सीतामाण्डव्यूर्मिलाश्रुतकीर्तीनां दर्शनेन निर्वासयिष्यति ।

दम्पती आकुलं नाटयतः ।

वामदेवः ।

त्वद्रूपाद्विपिनाय चीवरधरो धन्वी जटी शासन
रामः प्राप्य गतः कुतश्चन वनं सौमित्रिसीतासखः ॥ १३ ॥

उभौ मूर्च्छतः ।

वामदेवः । देव समाश्वसिहिसमाश्वसिहि । देवि कैकेयि समाश्वसिहिसमाश्वसिहि ।

दशरथः । केन पुनः कारणेन ।

वामदेवः । येन कैकयकुलस्यापरिद्दुर्यशःपांशुपातः ।

कैकेयी । ण हु जादभरदस्स दुच्चरिदं किंपि अथवा दस रहणरिन्दो से पिदा* ।

वामदेवः । शान्तं कं पुनः सुधार्द्रोधितिणतपस्यन्दो ।

दशरथः । स्फुटं कथय पर्याकुलोऽस्मि ।

वामदेवः ।

केकयस्य सुतया वरयुग्म
याचितोऽसि भवता च वितीर्णम् ।

दशरथः । किं तत् ।

वामदेवः ।

यत्किलास्तु भरतो युवराजः

कैकेयी । हा हदह्मि मन्दभाइणी† ।

दशरथः । किम् ।

* न खलु जातभरतस्य दुश्चरितं किमपि । अथवा दशरथनरेन्द्रोऽस्य पिता ।

† हा हतास्मि मन्दभागिनी ।

वामदेवः ।

स प्रयातु वनमद्य च रामः ॥ १४ ॥

दशरथः । हाहा धिक्कष्टम् ।

नरेन्द्रो वृद्धः स्त्रीवश इति मयि न्यस्तमयशो
निषण्णा दौरात्म्येप्विति मलिनिता केकयसुता ।
मन तस्याप्यस्मीति च भरते लक्ष्म लिखितं
न जाने वा कोऽस्मिन् रघुकुलकलङ्के कविरभूत् ॥ १५ ॥

क्र पुनस्तौ कैकेयीदशरथौ ।

वामदेवः । रामभद्र प्रवास्यापसृतौ ।

कैकेयी । ता किंति ण वारिदो वच्छो मे रामभद्दो * ।

वामदेवः । निवेदितवृत्तान्तः सपादोपग्रहं वारितोऽपि तदिदमभिधाय स्थितः ।

मया मूर्ध्नि प्रह्वे पितुरिति धृतं शासनमिदं
स यत्तो रत्तो वा भवतु भगवान् वा रघुपतिः ।
निवर्तिष्ये सोऽहं भरतकृतरत्तां निजपुरीं
समाः सम्यङ्नीत्वा वनभुवि चतस्रश्च दश च ॥ १६ ॥

दशरथः । हाहा वत्स रामभद्र अति हि नामासाम्प्रतिकता यत्तवापि गुरुजनाज्ञातिक्रमः । कैकेयि हा हताऽसि तोए दुज्जसदाई सुट्ठु चउत्थीचन्दो दिट्ठोत्ति † ।

कैकेयी । सकरुणं भअवदि रामभद्दसासुए सीदाजणणि वसुन्धरे रन्ध देहि अअं पणइजणो मागादि रहुउलवधूसमागमे

* तत् किमिति न वारितो वत्सो मे रामभद्रः ।

† त्वया दुर्यशदायी सुष्ठु चतुर्थी चन्द्रो दृष्ट इति ।

पडिक्किवदा ण जीविदुं पारिस्स । हा जाद भरद अलिअदु-ज्जसकलङ्किदा कधं दे मुहं दंसइस्सं हा ताद संभाविदोऽसि दुक्खेण हा अम्ब विडम्बिदाऽसि हा कोसल्ले सल्लिदाऽसि हा सुमित्ते सरीरमेत्तीकदाऽसि * इति रोदिति ।

ततः प्रविशतः कौशल्यासुमित्रे ।

कौशल्या । सहि सुमित्ते अलं संतप्पिदेण संपदं सो जाद रामभद्दो छिण्णणाहस्स उले उप्पण्णो जेण मायागुरुअणस्स वि सासणणिव्वाहणेण बालराहवेण भविअ जरापरिणदराहवाणं पच्छाकदं चरिदम् † ।

सुमित्रा । अइ अलिकावट्ठम्भसुत्थिदे किदं वाआवित्थ-रेण एहि पढमपलत्तदुःसहमहादुक्खं महाराअं सभाविस्स । इति परिक्रामतः ।

दशरथः । अवस्थोचितं परिक्रम्य अयि हृदय सातविलाय विलीयस्व कौशल्यासुमित्रे दृश्यते ।

---

* भगवति रामभद्रश्वश्रूः सीताजननि वसुन्धरे रन्ध्रं देहि अथ प्रण यिजनो याचते । रघुकुलवधूसमागमे प्रतिक्षिप्ता न जीवितुं पारयिष्ये । हा जात भरत अलीकदुर्यशकलङ्किता कथं ते मुखं दर्शयिष्यामि । हा तात संभावितोऽसि दुःखेन । हा अम्ब विडम्बितासि । हा कौशल्ये शल्यितासि । हा सुमित्रे शरीरमात्रीकृतासि ।

† सखि सुमित्रे अलं संतापितेन साम्प्रतं स जातरामभद्रो छिन्ननाथस्य कुले उत्पन्नो येन मायागुरुजनस्यापि शासननिर्वाहणेन बालराघवेण भूत्वा जरापरिणतराघवाणां पश्चात् कृतं चरितम् ।

‡ अयि अलीकावष्टम्भसुस्थिते कृतं वाचाविस्तरेण । एहि प्रथमप ततदुःसहमहादुःखं महाराजं संभावयामः ।

कैकेयी । संमुखमुत्थाय अइ हिअअणिहितदूसहदुःखसल्लि कोसल्लि अइ रामाणुसरणमलक्खणलक्खणपवित्ते सुमित्ते एसा रामणिव्वासिणी भरधदुज्जससपादिणी कैकेई संादइ * इति सर्वा रुदन्ति ।

दशरथः । सखे वामदेव अथ तदाकर्ण्य किमभिहितं वत्सलक्ष्मणेन ।

वामदेवः । हृदयकरोषंकष कथमपि लक्ष्मणवचनं देवादेश इति निवेद्यते ।

तातः प्रेम यतः करोत्यनुचितं त्याज्यः स पूज्योऽपि सन्
कैकेय्याः कुचरित्रमित्यमथचेत्तत्राऽस्मि कुण्ठक्रमः ।
आर्यश्चेद्दुरतो विकर्तनकुले कर्तुं कलङ्कं स्थितो
गुञ्जज्ज्यामुखरं धनुर्ननु मयाप्यद्यैव संभाव्यते ॥ १७॥

सुमित्रा । किं पुण अविदिदवुत्तन्तो मायामअसुप्पणहाणं वच्छलक्खणो † ।

दशरथः । रामभद्रेण किं प्रतिपन्नम् ।

वामदेवः । इदं कथ्यते ।

तातादेशात् कियदिदमहो यद्वनान्ते निवासो
यस्मिन् सेव्याः प्रशमनिधयो धाम निःश्रेयसानाम् ।
अप्येकाकी किमु पितृगिरा गाढगूढाचलेन्द्रै-
र्बद्ध्वा सेतुं लवणजलधौ हेलया संचरामि ॥ १८ ॥

* अयि हृदयनिहितदुःसहदुःखशल्ये कौशल्ये । अयि रामानुसरणसलक्षणलक्ष्मणपवित्रे सुमित्रे एषा रामनिर्वासिनी भरतदुर्यशःसंपादिनी कैकेयी संादति ।

† किं पुनरविदितवृत्तान्तो मायामयशूर्पणखानां वत्सलक्ष्मणः ।

दशरथः । प्रकृतिसुकुमारया तु जानक्या किमभिहितम् ।

वामदेवः । वत्से जानकि पितृश्वशुरसंपादितस्वस्त्ययनेतिरिहस्यैव त्वं रामभद्रागमनं प्रतिपालय गर्भेश्वरीभिर्भवादृशीभिर्दुरतिक्रमणीया विन्ध्यमहीधरभुव इत्युभयक्रममहत्तरिकाभिरभिहिता यदुक्तवती सीता तदिह पत्रिकायामास्ते मा दृश्यतां कण्ठावरोधादवाचनीयान्यक्षराणि इति पत्रिकां निपति ।

सुमित्रा । गृहीत्वा वाचयति ।

किं तादेण णरेन्दसेहरसिहालीढग्गपादेण मे
किं वा मे ससुरेण वासवसहासीहासणद्धासिणा ।
उद्देसा गिरिणो अ ते वणमहो सा चेअ मे वल्लहा
कोसल्लातणअस्स जत्थ चलणे वन्दामि णन्दामि अ ॥१९॥*

कौशल्या । संस्तभ्यात्मानम् ।

रामे वणाअ चलिदे पिदुसासणेण
तं लक्खणे अणुगदे सह जाणईए ।
आणन्दबाहसमए विहुरासुपूर-
मुच्छन्तएहि णअणेहिं विडम्बिदह्मि † ॥ २० ॥

---

* किं तातेन नरेन्द्रशेखरशिखालीढाग्रपादेन मे
किं वा मे श्वशुरेण वासवसभासिंहासनार्द्धासिना ।
उद्देशा गिरयश्चते वनमहो सा चैव मे वल्लभा
कौशल्यातनयस्य यत्र चरणौ वन्दे च नन्दामि च ॥

† रामे वनाय चलिते पितृशासनेन
तं लक्ष्मणेऽनुगते सह जानक्या ।
आनन्दबाष्पसमये विधुराश्रुपूर-
मुच्छ्वयां नयनाभ्यां विडम्बितास्मि ॥

विचिन्त्य सकरुणप्रमोदम् ।

किं अण्णेण सुणा णाम जणणीतारुण्णणिव्वासिणा
एक्कं मग्णध जादमत्थ विमले रामं रहूणं कुले ।
रज्जं वज्जिअ तादसासणपरो को पत्थिदो काणणं
किं वुड्ढेण वि राहवेण चरिदं एदं किदं केण वि * ॥ २१ ॥

दशरथः । क्व पुनस्तापसगृहस्थवेषयोर्विनिमयः कृतो वत्सेन ।

वामदेवः ।

छिन्ना दाम जटाकृतास्तत्र सुतस्यास्निग्धघनाः कुन्तलाः

दशरथः । हंहो हृदय किमद्यापि श्वसिषि ।

वामदेवः ।

छिन्ना चात्र दुकूलमत्र वसितं रामेण तद्वल्कलम् ।

कैकेयी । एम पेम्मणअमणिणो कंचणवन्धविद्दुसणेण वारिआक्खेवणपरिक्खेवो † ।

वामदेवः ।

भ्रातृस्वीकृतमत्रचानुविहितं सौमित्रिणाऽपि व्रतं

दशरथः । वत्स लक्ष्मण त्वच्चरितेनामुना विषीदति प्रसीदति च मे मनः ।

वामदेवः ।

भर्तुश्चानुगतात्रिह क्षितिभुवा श्वश्रूजनो वन्दितः ॥२२॥

---

* किमन्येन श्रुतेन नाम जननीतारुण्यनिर्वासिना
एकं मन्यध्वं जातमत्र विमले रामं रघूणां कुले ।
राज्यं वर्जयित्वा तातशासनपरः कः प्रस्थितः क्व ननं
किं वृद्धेनापि राघवेण चरितमिदं कृतं केनापि ॥

† एष पद्मरागमणेः काञ्चनग्रन्थिविध्वंसनेन वारिजाक्षेपणपरक्षेपः ।

कैकेयी । सासूणं परं अहं मन्दभाइणी जा पवसन्तराम-भद्दबहूपाबन्धणेण वञ्चिदा * ।

वामदेवः । इयमपरा विषादहर्षयोरुत्कर्षसीमा ।

याः स्नेहाज्जनकेन वेणिरचनां नीताः स्वयं विभ्रमात्
मैत्रेय्या परिचुम्बिताः प्रशमने या याज्ञवल्क्येन च ।

कैकेयी । सोत्कम्पम् । ता किं ताणम् † ।

वामदेवः ।

ताः सीताव्यतिकान्तकुन्तलसटाः कर्तुं जटाः प्रस्तुता
पादौ मूर्ध्नि निधाय संभ्रमवशात् सौमित्रिणाऽस्मिन् धृताः ॥२३॥

कैकेयी । अम्मो पच्चुज्जीविदम्हि अज्ज वामदेव वक्कल-णिवसणप्पसारिदहत्थे रामभद्दे वहूए किं पडिवण्णं आसि ‡ ।

वामदेवः । देवि जनकजाता यत् प्रतिपद्यते । पश्य ।

सीताप्युपाहिततनुत्वचि रामभद्रे
वल्कांशुकं हृदयसीम्नि समर्पयन्ती ।
कौशल्यया चरणयोः प्रणिपत्य शीघ्र-
माघ्राय मूर्ध्नि विधृता शपथैश्च तैस्तैः ॥ २४ ॥

दशरथः । रामजननि महदुपकृतं यद्विधाभवद्धारितं हृदयं दशरथस्य ।

वामदेवः । किं नाम धारितं हृदयमद्यापि बहु श्रोतव्यमस्ति । पश्य ।

* श्वश्रूणां परमहं मन्दभागिनी या प्रवसद्रामभद्रवधूपादवन्दनेन वञ्चिता ।

† तत् किं त्राणम् ।

‡ अहो प्रत्युज्जीवितास्मि आर्य वामदेव वल्कलनिवसनप्रसारितहस्ते रामभद्रे वध्वा किं प्रतिपन्नमासीत् ।

दयितमनुसरन्तीं मैथिलीमीक्षमाणा
गृहिणमनुयियासुर्जानकी सा कनिष्ठा ।
गुरुगुरुजनलज्जानम्रवक्त्राम्बुजेन
भ्रुकुटिपुटनिबन्धाद्वारिता लक्ष्मणेन ॥ २५ ॥

दशरथः । किमुच्यते मच्चरितेषु रामभद्रस्यान्तेवासी लक्ष्मणः । ततस्ततः ।

वामदेवः ।

निष्कर्णिकाऽस्तवलयोज्झितहारयष्टि-
र्निर्नूपुराप्यपकृताङ्गदमेखला च ।
त्वत्कः प्रसाद इति केवलमेव देवी
चूडामणिं निदधती चलिता वधूस्ते ॥ २६ ॥

ततश्च ।

स्मर्तव्यासि चिरं चकोरदयिते दात्यूहि तुभ्यं नमो
दृष्टस्त्वं शितिकण्ठ संहर गिरो गच्छाम्यहं सारिके ।
हे लीलाशुक विस्मरिष्यसि न मामित्येकमस्यावरा-
दित्यामन्त्र्य तया विलासवयसां विश्वे वयं रोदिताः ॥ २७ ॥

कैकेयी । पिअकेलिसउन्ता ज्जेव्व मे वच्छा * ।

वामदेवः ।

केलीहंसो गतिमनुसरन् कारितः पञ्जरे यत्
पश्चाल्लग्ना प्रमदहरिणी वारिता यत् सखीभिः ।
यद्वैदेह्या गृहशुकगिरो नादृताश्च व्रजन्त्या
तत्केनास्यां परि न रुदितं मोदितः साधुवादः ॥ २८ ॥

* प्रियकेलिशकुन्तेव मे वत्सा ।

विचिन्त्य देव अयमपरः सते वाराबसेको यदिदमपि राज-पुत्रीवचनं निवेदयते ।

तुभ्यं स्वस्ति विलासवापि भवतीं प्रेक्षे पुनर्दर्शनं
क्रीडाक्रीड किमुच्यसेऽद्य कथितं हे केलिदोले तव ।
वासागार नमोऽस्तु ते गुणनिकाः सर्वाः सुखं स्थीयता-
मेषा वःपरिचारिका वनभुवं रामानुगा गच्छति ॥ २९ ॥

दशरथः । हा रघुकुलचन्द्र रामचन्द्र कोऽयं दिलीपकुले वर्तितविपर्यासः ।

वृद्धो दशरथः सोऽयमुपास्ते गृहमेधिताम् ।
त्वया तु चीरकण्ठेन वनवासो निषेव्यते ॥ ॥ ३० ॥

वामदेवः । सखे भूकाश्यप रामभद्रप्रवसनव्यसने तु पौराणां कथं कथ्यतां विक्लवता ।

गाढोरःस्थलताडनत्रुटितधृतैर्हारावलीमौक्तिकैः
संदिग्धीकृतबाष्पबिन्दुरुदितं पौराङ्गनाभिस्तथा ।
आमूलश्लथदन्तिस्थितिनतग्रीवायतुण्डं यथा
वीथीपञ्जरवर्तिभिः शुककुलैरप्युत्क्रमुत्कूजितम् ॥ ३१ ॥

दशरथः ।

हे प्राणाः स गतो रामस्तदनु व्रजत द्रुतम् ।
जरसा जर्जरैरङ्गैः शक्तिर्दशरथस्य का ॥ ३२ ॥

संतापमभिनीय । अयि रामजननि कौशल्ये ।

शशिकान्तः कथं ग्रावा भजते वह्निरक्तताम् ।
रामस्तु चन्दनं भूत्वा जातो मे दावपावकः ॥ ३३ ॥

वामदेवं प्रति सखे ततस्ततः ।

वामदेवः । ततश्च कृतानुगमनायहर्यान्त्यमपि भरतं निज-पादुकाराधनाय नन्दिग्रामे निवेश्य पितृरहितराज्यरक्षणक्षणे शत्रुघ्नं स्वशपथैः संस्थाप्य मां च तच्चिन्तने नियुज्य सुमन्त्रमात्रपरिकरः प्रस्थितस्ते पुत्रः ।

ततः प्रविशति सुमन्त्रः ।

सुमन्त्रः । आर्यावर्तमतिक्रम्य दक्षिणां दिशं प्रव्रजता कुमाररामभद्रेण निवर्तितोऽस्मि द्राघीयसीं च तीर्थयात्रां कृत्वा पुनरयोध्यां प्राप्तस्तत्र जाने महाराजदशरथः स्वर्गनगरीतो निवर्तितो न वेति । राजप्रवेशितनाटितकेनावलोक्य कथमागत एव भगवतो मघोनः सखा । उपसृत्य स्वस्ति महाराज-दशरथाय देव सुमन्त्रमेवारितावतरो दुस्तरकान्तारपथिको रामभद्रोऽभिवादयते ।

दशरथः । सर्वाश्वस्तमम् । पूर्णवनवासव्रतो भवतु मे वत्सः ।

राज्यः । अपि कुसलं तस्स सकलत्तस्स रामभद्दस्स लक्खणस्स अ * ।

सुमन्त्रः । कथं न नाम कुशलं येषां चरितानि जनानामाशिषो भवन्ति ।

दशरथः । सखे सुमन्त्र निवेदय वैदेशिकत्वं गर्भरूपाणाम् ।

सुमन्त्रः । देव रघुराजधानीत इदं निवेद्यते ।

> सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
> गत्वा जवाच्चितुराणि पदानि सीता ।
> गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
> रामाश्रुणः कृतवती प्रथमावतारम् ॥ ३४ ॥

* अपि कुशलं तस्य सकलत्रस्य रामभद्रस्य सलक्ष्मणस्य च ।

राजा । साम्रत्र । वच्छे जाणइ लीलाभवणमणिकुट्टिम-केलिपरिक्कमणदुल्ललिआ भविअ पामरोजणजोग्गे णिवडि-दासि * ।

दशरथः । अहह निष्करुणो विधिः । मालतीमुकुलेन कूलं कल्पयति । ततस्ततः ।

सुमन्त्रः । पुरोपरिसरत्यागे तु ।

कठोलपल्लवतलेषु वसुन्धराम्
दाक्षिण्यतः प्रचलितामवलोक्य सीताम् ।
रामाशयेऽपि परिपन्थिनि यत्तदुक्त्या
सौमित्रिणा ऽद्रुपथ एव कृतो निवासः ॥ ३५ ॥

कैकेयी । सोम्ममुह जाद लक्खण अवसरमन्तणअ किं भणामि † ।

सुमन्त्रः । तत्र च कुशशयने निशामतिवाह्य प्रत्यूष एव पुनः प्रवृत्ता गन्तुं तत्र च ।

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुगर्भैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥ ३६ ॥

कतितिथेऽपि च प्रयाणे भागीरथ्याः परं पारं निश्चित्य प्रचलिताः । संततारध्वपरिश्रान्तया च सीतया कलमगोपीजनः स्त्रीस्वभावसुलभेन विश्रम्भेण मार्गं पृष्टः । निवेदितं च तेन ।

* वत्से जानकि लीलाभवनमणिकुट्टिमकेलिपरिक्रमणदुर्ललिता भूत्वा पामरीजनयोग्ये निपतितासि ।

† सौम्यमुख जात लक्ष्मण अवसरमन्त्रणक किं भणामि ।

पुरो भूः शालेयी कलमपरिपाकोत्सुकशुका
पुरः फुल्लाम्भोजा तिलकयति वो वर्त्म सरसी ।
अथाये सोमानो हलदलितमुस्तासुरभय-
स्ततोऽदूराद्दिव्या नयनविषयं यास्यति सरित् ॥ ३७ ॥

राघवः । कधं जा सा अम्हाणं पुराणससुरस्स भअवदो भगीरधस्स जसवडाआ गङ्गादेवी विद्धमहेसिमुहादो सुवन्ती आसि तस्सि जाव संपत्तं राहवकुडुम्ब तदोतदो * ।

सुमन्त्रः । ततश्च त्रियामामध्ये समासाद्य त्रिस्रोतस नावमारूढाः ।

कैकेयी । स कूलम् । भअवदि भाईरधि भईरधाराहणं सुमरिअ सुहुत्तारा होइ † ।

दशरथः । ससंभ्रमम् । अयि सुमन्त्र प्रस्थितकर्णधारा नौः ।

सुमन्त्रः । किमुच्यते लक्ष्मणमित्रं निषादाधिपतिर्गुहः कर्णधारः ।

कौशल्या । तदोतदो ‡ ।

सुमन्त्रः ।

शम्भोर्मौलौ शशितिलकिते क्लृप्तकेलिप्रचारा
स्रोतःसूत्रैः कृतविरचना भूर्भुवःस्वस्त्रयस्य ।
तामुत्तीर्य त्रिदशसरितं लोचनैरश्रुगर्भै-
रन्तर्वेदीप्रवचनविदां ते पदं प्राप्तवन्तः ॥ ३८ ॥

---

* कथं या सास्माकं पुराणश्वशुरस्य भगवतो भगीरथस्य जयपताका गङ्गा देवी वृद्धमहर्षिमुखात् श्रूयमाणा आसीत् तस्यां तावत् सांप्रतं राघवकुटुम्बम् । ततस्ततः ।

† भगवति भागीरथि भगीरथाराधनं स्मृत्वा सुखोत्तारा भव ।

‡ ततस्ततः ।

राज्यः । अम्मो सुट्टाणे ठिदा ते जणा तदो तदो * ।

सुमन्त्रः । ततश्च पश्चिमेन प्रयागं रात्रिमेकामतिवाह्य समुत्तीर्य कलिन्दनन्दिनीं नानाधातुविचित्रं चित्रकूटाचलं गताः ।

दशरथः । देवि दक्षिणकोशलाधिपतिपुत्रि सुकुमारा राजपुत्री दुःसञ्चारा चित्रकूटगिरेररण्यानी ।

सुमन्त्रः । तत्र च ।

आर्द्रालपाक्तनवोटजानां
सौमित्रिणा नीतफलोदकानाम् ।
कथाप्रसङ्गस्मृतबान्धवानां
तेषामभूत्तत्र चिरं प्रवासः ॥ ३९ ॥

किञ्च ।

त्वक्कारवी निवसनं मृगचर्म शय्या
गेहं गुहा विपुलपत्रपुटा घनाश्च ।
मूलं दलं च कुसुमं च फलं च भोज्यं
पुत्रस्य जातमटवीगृहमेधिनस्ते ॥ ४० ॥

कौशल्या । अज्ज कधेसु कीदिसं पुण्णं वणवासिणीए सीदाए घरिणित्तणं † ।

सुमन्त्रः । इदं निवेद्यते ।

यदास्वाद्यं सीता वितरति तदग्रे स्वगृहिणी
सुमित्रापुत्राय प्रणिहितमशेषं च तदनु ।

* अहो सुस्थाने स्थितास्ते जनाः ।

† आर्य कथय कीदृशं पुण्यं वनवासिन्याः सीताया गृहिणीत्वम्

यदामं वा नामं यदनतिरसं यच्च विरसं
फलं वा मूलं वा रचयति तु तेन स्वशमनम् ॥ ४१ ॥

कौशल्या । पुत्ति सीदे कहिं पुण महाराजराजजादाए भविअ णिसग्गदुल्लिदघरिणित्तणं तए सिक्खिदम् * ।

दशरथः । देवि दैवं शिक्षयति ।

सुमन्त्रः । इदमपरमाविश्यते हृदयकरोषं वचो यदुताध्वखेदजनकेषु प्रयाणकेषु ।

उत्थाय संभ्रमवशस्खलितोत्तरीया
कृत्वा धनुर्निचुलके मृगयानिवृत्तौ ।
सीताऽञ्चलेन तरलेन समुल्लसन्ती
रामाननाच्छ्रमितपक्ष्मरजः प्रमार्ष्टि ॥ ४२ ॥

दशरथः । ततस्ततः ।

सुमन्त्रः । ततश्च जानकीहरणकृतोद्यमविराधविध्वंसनेन सीतागात्रनिवेशितनखरैकस्य च धाराधरवायसस्य काणीकरणेन सुस्थान्याश्रमपदानि विधाय दक्षिणं महाकान्तारमधिकृत्य प्रस्थितास्ते ।

दशरथः । अयि सुमन्त्र नववधूटीलक्ष्मणयोः प्रथमप्रयिकता विक्लवयति ।

सुमन्त्रः । किं नाम विक्लवयति न पुनरानन्दयति ।

धरणितलनिषण्णां वर्त्मविश्रान्तिहेतो-
र्व्यजति जनकपुत्री वाससः पल्लवेन ।

---

* पुत्रि सीते कुत्र पुनर्महाराजराजजातया भूत्वा निसर्गदुर्ललितगृहिणी-त्वं त्वया शिक्षितम् ।

अगणितनिजखेदः पादसंवाहनाभिः
परिचरति तृष्यं लक्ष्मणो रामभद्रम् ॥ ४३ ॥

राज्ञ्यः । हा देव कहिं उण गब्भेसरेहिं भविअ जाणईल-क्खणेहिं पहिअजणजोग्गं गुरुसुस्सूसणं सिक्खिदम् * ।

सुमित्रा । उचिदकारित्तणे अस्सुदसिक्खिदाइं महाभाअ-अणचरित्ताइं † ।

दशरथः । जाने जानकीतोऽपि प्रसादवान् वत्सलक्ष्मणे रामभद्रः ।

सुमन्त्रः । यथादिष्टं देवेन ।

तारापेङ्खणपीतवाष्पपयसो यत्नेन संचारिताः
सीतायाः सविधस्थितेषु च मृगद्वन्द्वेषु वीरुत्सु च ।
बाले वत्सकृते प्रवासिनि जवादुल्लङ्घ्य गम्भीरतां
सौमित्रा निपतन्ति वत्सलतया पुत्रस्य ते दृष्टयः ॥ ४४ ॥

दशरथः । अपि शिवाः पन्थानो वत्सानां सुशकुनया सीतया ।

सुमन्त्रः । देव रामचन्द्रदर्शनमेव सर्वेषामपि सुशकुनम् । करुणाकौतुकाभ्यामागताभिर्वैखानसवधूभिर्हस्तचिबुकेन चिबुके चुम्बन्तीभिरभिहिता सीता पुत्रि पतिव्रते वैदेहि अप्रमत्तजनसंचारणीयानि गिरिकान्ताराणि तस्माद्वेदनावत्यप्यनुरामभद्रं संचर किं न पश्यसि ।

---

* हा देव क्व पुनर्गर्भेश्वराभ्यां भूत्वा जानकीलक्ष्मणाभ्यां पथिकजनयोग्यं गुरुशुश्रूषणं शिक्षितम् ।

† उचितकारित्वेऽश्रुतशिक्षितानि महाभागजनचरित्राणि ।

वप्रे यूथं चरति करिणां कन्दरास्वच्छभल्लाः
कुञ्जे सिंहैः स्थितिरुपहिता दुर्गमैर्मेखलासु ।
गोलाङ्गूलास्तरुषु सरणौ भ्रान्तिमन्तःपुलिन्दै-
र्विन्ध्ये सत्त्वं तदिह कतरच्चास्य हिंस्रं न रौद्रम् ॥ ४५ ॥

अपिच । सीरध्वजसुतासीनि ।

ग्रावग्रन्थिं परिहर पुरः कण्टकिन्यत्र वीरु-
द्गुल्मप्रान्तं दवदहनतः किञ्चिदुच्चैः कुरुष्व ।
शाखास्तिर्यग्विनमय शिरः पश्य वल्मीकरन्ध्रं
वंशस्तम्बे चरति च करी तत्स्थिरा तावदास्व ॥ ४६ ॥

सुमित्रा । अहह कधं णु क्खु कक्करोक्केरवक्कलणिविलासु गिरिवसुन्धरासु वसुन्धरापुत्ती णिसग्गसुकुमारा संचरदि * ।
सुमन्त्रः । इदं कथ्यते यथा संचरति ।

मुञ्चत्यये किसलयचयं लक्ष्मणो याति सीतां
पादाम्भोजे विसृजदसृजौ तत्र संचारयन्ती ।
रामो मार्गं दिशति च ततस्तेऽखिलेनाऽपि चाह्ना
शैलोत्सङ्गप्रणयिनि पथि क्रोशमेकं वहन्ति ॥ ४७ ॥

ततश्च ।

जरदजगरश्वासत्रासप्रनष्टमृगाङ्गनं
हरिनखमुखन्यासादस्तद्विपोज्झितचीत्कृतम् ।
शबरवनितोत्खातैः कन्दैः स्फुटस्थपुटान्तरं
तदनु सरितां बन्धुं विन्ध्यं गतास्त इमे गिरिम् ॥ ४८ ॥

---

* अहह कथं नु खलु कर्करोत्करवल्कलनिविडासु गिरिवसुन्धरासु व-सुन्धरापुत्री निसर्गसुकुमारा संचरति ।

कौशल्या । जा कविञ्जलकेलिजुज्झे वि बिभ्भन्ती आसि सा कधं पुण वाणरमुक्कबुक्कारवसङ्किअपहिअं किराअजालभल्लाहअवेल्लमाणअच्छभल्लकीलालकवलणकेलिकोदूहलिल्लकेसरिकिसोरदीहजीहालिहिज्जन्तपोम्मराअखाणिं विञ्झगिरिं पेक्खन्ती सुणा मे पदाइं धारइस्सदि हा हददेव्व सांतं केलिकदलीकन्दली मत्तकरिसुण्डावेढं सहावीअदि हंहो दिलीपकुलदेवदाओ सुरक्खिदं कुणध वणे एहवकुडुम्बम् * ।

दशरथः । किं करोतु वराकी क्व पुनर्मालतीकलिका दर्भगुम्फग्रथनाकदर्थनां क्षमते ।

सुमन्त्रः । शृणु यथा क्षमते ।

मूलेमूले पथि विटपिनां खेदिनी दीर्घमास्ते
शुष्यत्कण्ठी पिबति सलिलं निर्झरेनिर्झरे च ।
जातत्रासा निमिषति दृशं कन्दरेकन्दरे च
स्थानेस्थाने वहति च मतिं बहुवासाभिलाषा ॥ ४९ ॥

निःश्वस्य देव इदं पुनरतिकष्टतरं श्रावयामि ।

विन्ध्याध्वाने विरलसलिलास्तर्पिणी तत्र सीता
यावन्मूर्छां कलयति किल व्याकुले रामभद्रे ।
द्राक्षामिश्रैः पुटककलशीं मालुधानीदलानां
तावत्प्राप्तो दधदतिभृतां वारिणा नैर्झरेण ॥ ५० ॥

---

* या कपिञ्जलकेलियुद्धेऽपि बिभ्यत्यासीत् सा कथं पुनर्वानरमुक्तबुक्कारवशङ्कितपथिकं किरातजालभल्लाहतवेल्लदच्छभल्लकीलालकवलनकेलिकौतूहलितकेसरिकिशोरदीर्घजिह्वालिह्यमानपद्मरागखनिं विन्ध्यगिरिं प्रेक्षमाणा स्नुषा मे पदानि धारयिष्यति । हा हत दैव शान्तं केलिकदलीकन्दली मत्तकरिशुण्डावेष्टनं सह्यते हंहो दिलीपकुलदेवताः सुरक्षितं कुरुत वने राघवकुटुम्बम् ।

सर्वे समुच्छ्वसन्ति ।

कौशल्या । लक्खणलक्खण उवणेहि चलणकमलाइं सीसेण ते धारइस्सं * ।

कैकेयी । सहि कोसल्ले उट्ठेहिउट्ठेहि काहिं एत्थ रामो लक्खणो वा अदिक्कन्तं क्खु भणीअदि † ।

दशरथः । एष विषादहर्षयोरन्तरे वर्ते ।

कौशल्या । हा रामभद्द केण उण दिणअरकुलकुमारएण भविअ विंभगिरिवासदुःखं अणुभूदम् ‡ ।

सुमित्रा । सहि कोसल्ले ण सव्वो रामभद्दो § ।

कैकेयी । णअरेणअरे कैकेयी || ।

कौशल्या । तदोतदो ¶ ।

सुमन्त्रः । ततश्च ।

विहितशयनोऽनेकन्यासैरनोकहपल्लवैः
कलितकलशीपाणिः कुम्भोदलैश्च पुटीकृतैः ।
अथ विरचितः किंचित्तालप्रभेऽह्नि सुतेन ते
परिसरसरिज्जम्बूकुञ्जे निकेतपरिग्रहः ॥ ५१ ॥

दशरथः । सविशेषकरुणम् । ततस्ततः ।

---

* लक्ष्मणलक्ष्मण उपनय चरणकमले शीर्षेण ते धारयिष्यामि ।

† सखि कौशल्ये उत्तिष्ठोत्तिष्ठ क्वात्र रामो लक्ष्मणो वा अतिक्रान्तं खलु भण्यते ।

‡ हा रामभद्र केन पुनर्दिनकरकुलकुमारकेण भूत्वा विन्ध्यगिरिवास-दुःखमनुभूतम् ।

§ सखि कौशल्ये न सर्वो रामभद्रः ।

|| नगरेनगरे कैकेयी ।

¶ ततस्ततः ।

सुमन्त्रः । तदित्थं कतितिथे च प्रयाणे ।

गिरिषु जयपताका विन्ध्यशैलस्य पाणि-
द्विपकुलनिचिताम्भाः प्रेयसी पश्चिमाब्धेः ।
नयनपथमथागाच्चमेदा देव तेषां
शिशिरितजलमिन्दोश्चन्द्रिकेव प्रसूता ॥ ५२ ॥

दशरथः । या किल भगवत्यार्यावर्त्तदक्षिणापथयोर्विभाग-
रेखा ।

सुमन्त्रः । ततश्चाहमनुगमनकृताग्रहयन्त्रिरपि देव द्रागहं
निगदता रामभद्रेण विनिवृत्तये स्थापितः । किन्त्व देव ।

कृत्वा पाणी शिरसि जटिले पद्मकोशायमानौ
रामेण प्राक्प्रणतिविनयो देव विज्ञापितस्ते ।
बाष्पस्तारातरलनयनस्तम्भितोप्युज्जिहानः
पश्चात् मुक्तः श्वसितविधुतो वन्दितेनाननेन ॥ ५३ ॥

कौशल्या । अज्ज तए विमुक्को रामभद्दो * ।

सुमन्त्रः । देवि सर्वे वयं रामभद्रेण परित्यक्ताः ।

कौशल्या । तदोतदो † ।

सुमन्त्रः । ततश्च ।

नीत्वा कालं तरुणतरणिं स्निग्धजम्बूनिकुञ्जे
धारादत्तोच्चमितसिकतासद्मनां क्रीडनेन ।
रेवां देव स्खलितचरणा पिच्छिलाभिः शिलाभि-
स्तामुत्तीर्णा पथिकतरलन्यस्तहाहा वधूस्ते ॥ ५४ ॥

सुमित्रा । तदोतदो ‡ ।

---

* आर्य त्वया विमुक्तो रामभद्रः ।
† ततस्ततः ।
‡ ततस्ततः

सुमन्त्रः । ततोऽहं तानवलोकयन्नवाङ्कुल एव तां रजनी-मुषितस्ते तु परपारे । अथान्येद्युः ।

जित्वा बाष्पं किमपि कलया स्फारितैर्नेत्रपात्रै
रवाक्कूले विहितवसतिं वीक्षमाणाः क्षणं माम् ।
ते दिग्भागं स्तिमितवचसो नर्मदायाः परस्ता-
ल्लोपामुद्रापतितिलकितं देव गन्तुं प्रवृत्ताः ॥ ५५ ॥

दशरथः । वत्स रामभद्र मन्ये ममैव मलयाचलवासिनः प्रियवयस्यस्य जटायोरपि सर्वङ्कषो भविष्यसि ।

ततः प्रविशति गगनाद्वावतरणनाटितकेन सप्रहारव्यथो रत्नशिखण्डः ।

चन्द्रहासप्रहारोत्थां जयन् मूर्च्छां नभोनिलैः ।
अयोध्यामवतीर्णोऽस्मि कथंचित् क्षतपक्षतिः ॥

विचिन्त्य एवं स्थितोऽपि ।

एषोऽहं जलमयरत्नकामधेनुं
पक्षाभ्यां सपदि विघूर्ण्य ताम्रपर्णीम् ।
द्राक्कृत्वा मलयतरून् द्रुताहिपाशा-
नादेशाद्दशरथमागतो जटायोः ॥ ५६ ॥

तद्यावत्तत्रभवन्तं भूकाश्यपं पश्यामि गगनादुत्क्रमेणावलोक्य । एष महाराजदशरथः । कः कोऽत्र भोः । निवेद्यतामजनन्दनाय नरेन्द्राय ।

जटायोर्गृध्रराजस्य सुहृदस्तव शैशवात् ।
दूतो रत्नशिखण्डोऽस्मि तन्निदेशादुपागतः ॥ ५७ ॥

सुमन्त्रः । इतइतः ।

रत्नशिखण्डः । अवतरणनाटितकेन स्वस्ति महाराजदशरथाय ।

दशरथः । अपि कुशलं जटायोर्वयस्यस्य ।

रत्नशिखण्डः । प्रियसुहृदुपयोगेन न पुनः शरीरेण ।

दशरथः । भद्र समुपविश्य कथ्यतां व्याकुलोऽस्मि ।

रत्नशिखण्डः । उपविश्य अद्य प्रगेतनप्रचारविनिर्गतैरन्वयशकुन्तिभिर्बान्तधाराश्रुविसरैरागत्य करुणं क्रन्दद्भिरावेदितं शकुन्तराजाय जटायवे यदुतोपासितप्रथमसन्ध्ये साकं जानक्या लक्ष्मणलक्ष्मण्युटजाङ्गणमधितिष्ठति सप्रमदमुद्रे रामभद्रे तत्प्रदेशवर्तिभिरुद्घोषि ।

संचारी रोहणाद्रिः किमयमविकलः कोलिसंप्राप्तमूर्त्तिः
कोदण्डः पिण्डिताङ्गः किमुत सुरपतेर्जङ्गमत्वं गतोऽसौ ।
चित्रं वा भूतधात्र्याः प्रकृतिबलमिदं कल्पयद्वाग्वितर्को
नित्यं वैखानसीनां तिलकितभुवनं भूतमभ्येति किञ्चित् ॥५८॥

अभिहितं च रामभद्रेण जानकि कारय चक्षुषी पारणां पश्यपश्य ।

श्रेणीपर्युप्तरत्नव्यतिकरकलनाचित्रिताङ्गः कुरङ्गः
कान्त्या दूरस्थितानामपि सलिलमुचां संदधच्चापचिह्नम् ।
वेगेनान्वीतमार्गो मुनिबटुभिरलं कौतुकोत्तानिताक्षै-
र्भूयो भूसन्निवेशे चरति रचयति व्योम्नि किञ्चित्प्लुतानि ॥ ५९॥

तदवलोकनकुतूहलिना चाभिहितं लक्ष्मणेन । आर्ये दृश्यतां द्रष्टव्यम् ।

आपुच्छादावतुण्डान्मरकतरचितां पृष्ठपीठीं दधानो
नीरन्ध्रासक्तमुक्ताफलपटलचयापाण्डुरां क्रोडपालीम् ।

पादैर्बालप्रवालच्छदपुटघटितैरच्छवैडूर्यमय्या
दृष्ट्वाऽयं दण्डकायां भुवि वनहरिणोऽभ्येति विस्मापयन्नः॥६०॥

कौशल्या । तदो तदो * ।

रत्नशिखण्डः । ततश्च विचित्ररचनाकर्मणि तच्चर्मणि सीताकौतूहलिकतामवगत्य तद्ग्रहणार्थं लक्ष्मणमवस्थाप्य तमनुपृष्ठसृतो रामभद्रः कियतीषु च कालकलासु गतासु किं तत्राद्भुतभूते भविष्यत्यार्यस्येति जाताशङ्कां वैखानसपत्नीनां समर्प्य जानकीं सौमित्रिरपि राममनुसृतः ।

कौशल्या । किञ्चिदुस्थाय जाद लक्खण अलमलं माणिक्ककुरङ्गेण माक्खुमाक्खु एदाणिं जाणईं अटईकन्तारे परिच्चअसु † इति धारयितुमिच्छति ।

सुमन्त्रः । देवि अतिक्रान्तवर्णनायामलमलमतिसंमोहेन ।

दशरथः । ततस्ततः ।

रत्नशिखण्डः ।

आकर्णाकृष्टचापार्पितविशिखभृतानुद्रुतश्चानणीयान्
माणिक्याङ्गः कुरङ्गः सपदि धृतजवो जानकीवल्लभेन ।
सीतां चाधाय मध्येमणिवलभि बली रावणः पुष्पकेण
स्वां गन्तुं राजधानीं सकलसुरवधूचण्डवृतः प्रवृत्तः॥६१॥

दशरथः । धनुर्धनुः ।

सुरेन्द्रवैरिशिरसां छेदविद्यापरीक्षिताः ।
दशवक्त्रस्य वक्त्राणि लुनन्तु मम सायकाः ॥ ६२ ॥

---

* ततस्ततः ।

† जात लक्ष्मण अलमलं माणिक्यकुरङ्गेण मा खलु मा खल्विदानीं जानकीमटवीकान्तारे परित्यज ।

इत्युत्थातुमिच्छति ।

सुमन्त्रः । देव तदिदमपक्रान्तोपवर्णनं कोयमायुधग्रहण-कालः ।

दशरथः । उपविश्य । हाहा धिक्कष्टमयमपूर्वो रघुराजकुलकलङ्कावतारः । विचिन्त्य तर्हि मायामयः ।

मायामृगेण रामोऽपि हृत इत्यद्भुतं महत् ।
मतिर्वा खर्वभाग्यानां पश्यन्त्यपि न पश्यति ॥ ६३ ॥

सुमित्रा । पुत्ति सीदे कवलितहालाहलस्स जणस्स एस संपदं सोओ । जा देसन्तरे वि रक्खसेण हीरसि * ।

कैकेयी । कैकेईदुज्जसमहाकन्दस्स एस दुदीओ कन्दलुब्भेओ † ।

दशरथः । उपविश्य सवैलक्ष्यम् । ततस्ततः ।

रत्नशिखण्डः । एतद्व्यतिकरमन्वयवयोवदनेभ्यः श्रुत्वा स ते सखा गृध्रकपोतैः परिवृतो दुःसहतुण्डप्रहारतिरस्कारो मलयाचलादुच्चलितः । अत्रान्तरे त्रिदशवक्त्रविमुच्यमानदृग्गोचरस्य रजनीचरभर्तुरग्रे मार्गं निरुध्य कृतवान् गगनावगाहमामूलविस्तृतपतत्रपुटो जटायुः ।

दशरथः । साधु वयस्य साधु ततस्ततः ।

रत्नशिखण्डः ।

यत्संवर्ते दिनमणिरयं वासरस्यैककर्ता
यद्विस्तारे भवति रजनीरञ्जितो जीवलोकः ।

* पुत्रि सीते कवलितहालाहलस्य जनस्य एष साम्प्रतं शोको या त्वं देशान्तरेऽपि राक्षसेन ह्रियसे ।

† कैकेयीदुर्यशमहाकन्दस्य एष द्वितीयो कन्दलोद्भेदः ।

ताभ्यां हन्यत्रस्णतनयो रोदसी पत्रतिभ्यां
जातो योद्धुं त्रिभुवनरिपोरग्रतो रावणस्य ॥ ६४ ॥

दशरथः । किमुच्यते संपातिसहोदरो मन्मित्रमारुणिरसि ।
ततस्ततः ।

रत्नशिखण्डः । ततश्चाभिहितमभिमानोद्धुरं गृध्रराजेन ।

संप्राप्तोऽहं जटायुर्मलयगिरिगुहाकन्दरक्रोडनीड-
स्तद्बा: सीतापहारिन् बिभृहि करचये केनचिच्चन्द्रहासम् ।
येन त्वत्कृत्तचूडारुणमणिनिकरं मत्कचण्डायतुण्ड-
व्यापारैः स्रंसमानं सपदि शकुनयो मांसगर्धा ग्रसन्ताम् ॥ ३५ ॥

दशरथः । अहो निरुपममोजायितं वेगविजितवायोर्जटायोः ।

कौशल्या । भअवदि सङ्गामसिरि जई भोदु तत्तभवं जडाऊ ।
तदोतदो * ।

रत्नशिखण्डः । तत्सर्वैरेवास्माभिररुणगरुडान्वयप्रसवैः शकु-
न्तिभिरन्तरितस्तातजटायुर्योद्धुं चारब्धं ततश्च ।

कर्णाभ्यर्णेष्वलिकफलकेष्वायते नेत्रतन्त्रे
नासावंशेष्वधरपुटकेष्वंसवक्षःस्थलीषु ।
योयो भागः सुरपतिरिपोः स्वामिनः स्पष्ट आसीत्
तंतं गृध्राः कवलकलितं लूनवन्तो नखाग्रैः ॥ ६६ ॥

ततश्च सकलैरेव शकुन्तिवीरैराकुलितेन राक्षसराजेन चन्द्र-
हासव्यापारेणास्याभिमुखं प्रवृत्तं हन्यमानेषु च महापतत्रिभ-
टेषु जटायुना पुनः सर्वे वयमन्तरिताः । ततश्च ।

---

* भगवति संग्रामश्रीर्जयो भवतु जटायुः । ततस्ततः ।

घिग्मे तत्र पतत्त्रिशाचररणे नाङ्गं जटायोरभू-
न्मे छिन्नं दशकन्धरेण कणशो यच्चन्द्रहासासिना ।
लङ्काभर्तुरपि प्रचण्डकुलिशव्यापारनीराजितं
यत्तुण्डेन न खण्डितं खगपतेर्यद्वा न लूनं नखैः ॥ ६७ ॥

कौशल्या । भअवदि सङ्गामसिरि मुच्चदु सीदां बन्दिग्गहादो * ।

दशरथः । ततस्ततः ।

रत्नशिखण्डः ।

तदनु दिवि जटायुश्चञ्चुसंदंशमुद्रा-
कवलनविधिवेगप्रस्खलच्चन्द्रहासः ।
दशभिरपि नखाग्रैर्दिग्गजेन्द्राङ्कुशाभैः
सपदि दशमुखानि प्राद्रवद्रावणस्य ॥ ६८ ॥

दशरथः । साधु गरुडाग्रज साधु साधु दिनमणिसारथे साधु जटायुना पुत्रेण ।

कौशल्या । तं कदं अज्ज जटाउणा जं सहिसुसाहरणे कीरदि तदोतदो † ।

रत्नशिखण्डः । ततश्च ।

द्राक्चन्द्रहासपरिखण्डितचञ्चुकोटि-
श्चञ्चुप्रहारपरिखण्डितचन्द्रहासः ।
नाडिन्धमे तडिति कण्ठतटे स तेन
कुन्तेन कुन्तनखरः प्रहतः शकुन्तः ॥ ६९ ॥

---

* भगवति संग्रामश्रीः मुञ्चतु सीतां बन्दिग्रहात् ।

† तत् कृतं जटायुना यत् सखीसुषाहरणे कीर्त्यते । ततस्ततः ।

ततश्च तदिदमपश्चिमं तव कण्ठगतप्राणेन जटायुना संदिष्टम् ।

यत्सम्पातिसहोदरस्य सदृशं यच्चारुणेः साम्प्रतं
यच्चार्योननवायुधस्य च समं युक्तं च यद्रावणे ।
तन्मत्रोमनुरुन्धता तव मया तत्सङ्गरोये कृतं
न व्रीडां गमितोऽस्मि येन न पुनः स्यां संभवे येन च ॥ ७० ॥

दशरथः । हा अरुणकुलालङ्करण हा संपातिवल्लभ हा गरुडप्रसादवि कामवस्थां नीतोऽसि प्रियसुहृदा दशरथेन ।

कौशल्या । हा देव्व तए कदविलम्बं समत्त्यत्रं वणगदं राहवकुडुम्बं * ।

सुमित्रा । ण केवलं वणगदं भुवणगदं वि † ।

रत्नशिखण्डः । तत्प्रहिणोतु मां महाराजो निजकुलकुलायगमनाय ।

दशरथः । साधु एतु भवान् ।

रत्नशिखण्डः । परिक्रम्य निष्क्रान्तः ।

कैकेयी । उत्तरकोसलणरिन्द किमवसिदं रहुवंसस्स ‡ । अत एवाऽहम् ।

यस्मिन्नापः सह परिणताः सूर्यपुत्रीपयोभि-
र्मन्दाकिन्याः कुमुदरुचयो मेचकेन्दीवराभैः ।
तीर्थे तस्मिन् मम विशदितं देवताभूय भूयः
स्वाङ्गत्यागात् स्पृहयति मनो वासवार्धासनाय ॥ ७१ ॥

इति परिक्रम्य सर्वे निष्क्रान्ताः ।

॥ निर्दोषदशरथो नाम षष्ठोऽङ्कः ॥

---

* हा देव त्वया कृतविडम्बं समस्तं वनगतं राघवकुटुम्बम् ।

† न केवलं वनगतं भुवनगतमपि ।

‡ उत्तरकोशलनरेन्द्र किमवसितं रघुवंशस्य ।

## ॥ सप्तमोऽङ्कः ॥

अतः परमसमपराक्रमो भविष्यति ।

ततः प्रविश्य वैतालिकः समन्तादवलोक्य नेपथ्यं प्रति भद्र चन्दनचण्ड परित्यज निद्रामुद्रां विमुञ्च निजोटजाभ्यन्तरं प्रभातप्राया रजनी तथाहि ।

तारारणां तगरत्विषां परिकरः संख्येयशेषः स्थितः
स्पर्धन्तेऽस्तरुचः प्रदीपकशिखाः सार्धं हरिद्राङ्कुरैः ।
मन्त्रस्तम्भितपारदद्रवजडो जातः प्रगे चन्द्रमाः
पौरस्त्यं च पुराणशीधुमधुरच्छायं नभो वर्तते ॥ १ ॥

नेपथ्ये । अज्ज कप्पूरचण्ड एसा मिट्ठा पभादनिद्दा ता सुविस्सं दाव * ।

कर्पूरचण्डः । अहो उत्साहशक्तिर्भवतोऽमन्त्रशीलो महीपतिरनपरप्रबन्धदर्शी कविरपाठरुचिश्च बन्दी न चिरं नन्दति ।

नेपथ्ये ता एत्थ सत्थरत्थिदो निमीलिदनयणो जेव्व सुप्पभादं पठिस्सं † ।

कर्पूरचण्डः । एतदपि भवतो भूरि ।

नेपथ्ये । सच्चं पच्चक्खीकदसरस्सईपरिमलो अम्हो मुहुत्तो वट्टदि तधा अ ।

जा गब्भे वि घरस्स दीवअसिहा सा वि च्छविच्छुड्डिआ
जं दण्डाहिं वि खण्डिदं कुवलयं संमीलिदं तं वि अ ।

---

* आर्य कर्पूरचण्ड एषा मिष्टा प्रभातनिद्रा तत् स्वप्स्यामि तावत् ।

† तदत्र संस्तरस्थितो निमीलितनयन एव सुप्रभातं पठिष्यामि ।

जं गोट्ठीचरिदं वि तं वि सहसा भासाए सव्वङ्किदं
ता मण्णे ण चिरा भविस्सदि रई पुव्वादिसो मण्डणम् * ॥ २॥

कर्पूरचण्डः । तावदुपश्लोकयामो रामभद्रं परपरितोषो-
पपाद्यफलं हि वैतालिकव्रतं किञ्चिदुच्चैः ।

मार्तण्डैककुलप्रकाण्डतिलकस्त्रैलोक्यरत्नामणि-
र्विश्वामित्रमहामुनेर्निरुपधिः शिष्यो रघुग्रामणीः ।
रामस्ताडितताडकः किमपरं प्रत्यक्षनारायणः
कौशल्यानयनोत्सवो विजयतां भूकश्यपस्यात्मजः ॥ ३ ॥

नेपथ्ये ।

कन्दप्पुद्दामदप्पप्पसमणगुरुणो बम्हणो कालदण्डे
पाणिं देन्तस्स गङ्गातरलिदससिणो पव्वदीवल्लभस्स ।
चावं चण्डाहिसिञ्जारवभरिअणहं कण्णारुद्धमज्झं
जं भग्गं तस्स सद्दो णिसुणि तिहुयणे वित्थरन्तो न माइ † ॥४॥

कर्पूरचण्डः ।

यो जम्भं जितवान् स येन विजितो देवः सुरग्रामणी-
र्ज्याबद्धं विदधे निशाचरपतिं तं कार्तवीर्यार्जुनः ।

---

* सत्यं प्रत्यक्षीकृतसरस्वतीपरिमलो ब्राह्मो मुहूर्तो वर्तते तथा च ।
या गर्भेऽपि गृहस्य दीपकशिखा साऽपि च्छविमुक्ता
यद् दण्डार्द्धम खण्डितं कुवलयं संमीलितं तदपि च ।
यद् गोष्ठीचरितमपि तदपि सहसा भाषया सर्वाङ्कितं
तन्मन्ये न चिराद् भविष्यति रविः पूर्वदिशो मण्डनम् ॥

† कन्दर्पोद्दामदर्पप्रशमनगुरोर्ब्रह्मणः कालदण्डे
पाणिं दातुर्गङ्गातरलितशशिनः पार्वतीवल्लभस्य ।
चापं चण्डाहिसिञ्जारवभरितनभः कर्णारुद्धमध्यं
यद् भग्नं तस्य शब्दो निशम्यते त्रिभुवने विस्तरन् न माति ॥

तद्दोःखण्डदवानलो भृगुपतिर्निर्जित्य तं च त्वया
मालेयं जयसंपदो विरचिता स्वस्मादनर्घेसरी ॥ ५ ॥

नेपथ्ये ।

हेलासिञ्जिदसिञ्जिणीझणझणारावेण वीणाइदं
कोदण्डं तुह पाणिपीडनणदं जुज्झे णिअं ताखणम् ।
ते सव्वे खरदूसणप्पभुदिणो जीवेहिं मुक्का पुरो
पच्छा भल्लपवेल्लिएहिं सहसा देहेहिं भूमिं गदा * ॥६॥

कर्पूरचण्डः ।

जात्यन्धत्वमधिष्ठितं सपदि तैर्दत्तं जलं तैर्दृशे
दृष्टिं सृष्टवतो विधेर्भगवतः क्लेशश्च तैर्भावितः ।
येषां ताडयितुं स्थिते त्वयि जवान्मारीचमायामृगं
द्रागदैवादनुपेयुषां दिविषदां जाते वृथा चक्षुषी ॥ ७ ॥

अपिच ।

नाद्याप्यस्ति तदीययोर्नयनयोः संकोचदुःस्थं वपु-
स्तेषां गण्डतटे स्फुटत्पुलकता नाद्यापि विश्राम्यति ।
ते नाद्यापि वहन्ति हर्षणतया रिक्तं च चेतो निजं
दृष्टं देव कबन्धदैत्यनिधनं यैस्त्वत्कृतं कौतुकात् ॥ ८ ॥

नेपथ्ये ।

पुञ्जीभूदहरट्टहासजइणा रूपेण रुद्धुं वरं
कवीणं वालिजसं व दुन्दुभिमहाकङ्कालसेसं जहा

---

* हेलासिञ्जितसिञ्जिनीझणझणारावेण वीणायितं
कोदण्डं तव पाणिपीडननतं युद्धे निजं तत्क्षणम् ।
ते सर्वे खरदूषणप्रभृतयो जीवैर्विमुक्ताः पुरः
पश्चात् भल्लप्रवेल्लितैः सहसा देहैर्भूमिं गताः ॥

पेल्लन्ता चलणेण विंझगिरिणो हेलायिदं तं तुए
अस्से एव्व दुवे परं ण हु गदा वेरी वि बन्दित्तणम् * ॥९॥

अविअ ।

लीलामुक्कक्कबाणव्वणविवरगुहामज्झमुच्छन्तवाआ
जाआ जे सत्त ताला तिहुअणजइणो चावचारेण तुज्झ ।
णिच्चं गाअन्ति हेलाभरिदणहअलब्भन्तरं ताररावा
सत्तेहिं तेण तेहिं तुह जसपसरं सत्तलोअट्ठिदव्व † ॥१०॥

कर्पूरचण्ड: ।

पौलस्त्यस्यावमन्ता त्रिदशपतिसुतश्चक्रवर्त्ती कपीनां
कर्त्ता संध्यामसमाधेर्जलनिधिषु चतुर्दिक्कुञ्जाश्रितेषु ।
किष्किन्ध्यां राजधानीं भुजपरिघबलात्त्रायमाणस्त्वयाऽसौ
वाली हेमाब्जमाली गुणनिधिरिपुणा निर्मितो दक्षिणेमा ॥११॥

नेपथ्ये ।

जे केलासे कलिन्दे मलअमहिहरे मन्दरे मेरुमेले-
सज्झे विंझे महेन्दे तह अ हिमवहे पव्वदे वाणरेन्दा ।

* पुञ्जीभूतहराट्टहासजयिना रूपेण रुद्धं परं
दोणं वालियशश्च दुन्दुभिमहाकङ्कालशेषं यथा ।
प्रक्षिपता चरणेन विन्ध्यगिरेर्हेलायितं तत् त्वया
आवामेव द्वौ परं न खलु गतौ वैरिणाविव बन्दित्वम् ॥

† अपिच
लीलामुक्तैकबाणव्रणविवरगुहामध्यमूर्च्छद्वाता
जातास्ते सप्त तालास्त्रिभुवनजयिनश्चापचारेण तव ।
नित्यं गायन्ति हेलाभरितनभस्तलाभ्यन्तरं ताररावाः
सप्तभिस्तेन तैस्तव यशः प्रसरं सप्तलोकस्थितमिव ॥

सव्वे सुग्गीवपादप्पणदिपणइणो ते वि जं स प्पसादो
सेवातुट्टस्स सच्चं तुह जसजलधेर्मूलदावेल्लिदाणम् * ॥ १२ ॥

कर्पूरचण्डः ।

भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो
यच्चाशोकमहावनं दलितवानत्तं च यत्तुण्णवान् ।
सीतापायनमौलिरत्नसहितः प्राप्तश्च यत् त्वामसौ
तत्राप्येष भवत्प्रभावमहिमा निर्यन्त्रणः कारणम् ॥ १३ ॥

नेपथ्ये ।

किं अण्णेहिं विराधप्पहुदिविदरणाडंवरुग्घट्टणेहिं
एदं ते वण्णआमो जलनिधिसविधावासिदे जं तुमम्मि ।
वट्टन्ते रक्खसीणं तरलकरदलप्फारतुट्टन्तहारा
हारावक्कन्तकण्ठा णवणअणजलुप्पीलिणो विप्पलावा † ॥ १४ ॥

कर्पूरचण्डः ।

नानानिर्व्याजवीर्यस्तुतिशतसदृशं कुम्भकर्णानुजोय-
द्राग्देवेनाभिषिक्तो रजनिचरमहाराज्यलाभाय तेन ।
लङ्केन्द्रस्यापि जातान्यतिनिभृतसृतश्वासबन्धावधूत-
श्मश्रूण्यग्राणि चिन्तामुकुलितनयनस्रञ्जि सत्रोननानि ॥ १५ ॥

---

* ये कैलासे कलिन्दे मलयमहीधरे मन्दरे मेरुशैले
सह्ये विन्ध्ये महेन्द्रे तथा च हिमवहे पर्वते वानरेन्द्राः ।
सर्वे सुग्रीवपादप्रणतिप्रणयिनस्तेऽपि यत् स प्रसादः
सेवातुष्टस्य सत्यं तव यशोजलधेर्मूलतावेल्लितानाम् ॥

† किमन्यैर्विराधप्रभृतिविदरणाडम्बरोद्घाटनै-
रेतत्ते वर्णयामो जलनिधिसविधावासिते यत् त्वयि ।
वर्तन्ते राक्षसीनां तरलकरतलस्फारत्रुट्यद्धारा
हारावाक्रान्तकण्ठा नवनयनजलोत्पीडिनो विप्रलापाः ॥

प्रविश्य । पटीक्षेपेण प्रतीहारः । रेरे अलीकवैतालिक कोऽयं कलकलः ।

कर्पूरचण्डः । आर्य रामदेवस्य शौर्यगुणभोगावली गीयते ।

प्रतीहारः । ननु रामदेवेन निषिद्धमात्मोपवर्णनमादशरथ-स्वर्गारोहणश्रुतेरादशकण्ठबन्धम् ।

कर्पूरचण्डः । विभीषणवैतालिको वैदेशिकोऽस्मि । तदे-कवारं मर्षय एष त्यक्तो भोगावलीपाठः । सप्रश्रयम् । कथं पुनरधिगतपितृमरणशोकशङ्कुस्तत्रभवान् रामदेव एवंविधे स-मुद्योगकर्मणि प्रवर्तते

प्रतीहारः । विहस्य अप्यनभिज्ञोऽसि सच्चरितानाम् ।

वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् ।
कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥ १६ ॥

बन्दी । आर्य कोपेनान्तरितोऽसि । कथय किं पुनः कुरुते रामभद्रः ।

प्रतीहारः । पुलिनोपरि रचितकुशप्रस्तरोपविष्ट उपोषित-श्च भगवन्तं भागीरथीवल्लभमुपास्ते । तत्र च ।

सुग्रीवे प्रणयोल्लसाः शशधरे बद्धाभ्यसूयाश्चिरं
साश्चर्याः पवनात्मजे धृतरुषः पौलस्त्यवत्यां दिशि ।
सोत्साहाश्च शरासने जलनिधौ क्षुब्धाश्च कृत्वां निशां
रामस्याद्य नियन्तुमेव न गता नानारसा दृष्टयः ॥ १७ ॥

बन्दी । आर्य एवमपि समुद्रो न किञ्चित्प्रतिपद्यते ।

प्रतीहारी । जडराशिरसौ ।

बन्दी । तथाविधे उदन्वति किमाह रामदेवः ।

प्रतीहारः । इदं कथ्यते ।

रामे तटान्तवसतौ कुशतल्पशायि-

न्येवं तु नाम भवतो भगवच्चनाभ्या ।

स्मृत्वा तदेहि सगरं च भगीरथं च

दृष्ट्वाऽथ वा मम धनुश्च शिलीमुखांश्च ॥ १८ ॥

बन्दी । तर्हि लङ्घितो गोष्पदवत्समुद्रः ।

प्रतीहारः । समंतादवलोक्य भोभोः सकलप्लवङ्गमयूथपतयः समस्तगोलाङ्गूलसेना निःशेषाच्छभल्लचमूपरिवृढाश्च किमिदमवीरजनोचितमाचरितं यद्दूरात् परिहृतवेलावनालीनिवासकेलिभिः पराङ्मुखं पदात्पदमपक्रम्यते ।

कर्पूरचण्डः । विलोक्य कथमगणितनिजकुलक्रमाचारास्त्वद्वचनमप्यवधीरयन्तो मकराकरं दुस्तरमवलोक्य यथागतं प्रस्थिता एव ।

प्रतीहारः । भवतु संस्थापयामि ।

पीतोऽयं कलशोद्भवेन चुलुकं कृत्वैकमम्भोनिधि-

र्नो वेलामपि लङ्घते नियमितया सादयं वाडवात् ।

कल्पान्तेषु वहत्ययं च विपुलं श्वभ्रावशेषं वपु-

स्तत्पूर्वाकलितेप्यमुत्र भवतां कोऽयं विषादोदयः ॥१९॥

किञ्च ।

अप्येकैके पिबत चुलुकं यद्यपां सैन्धवीनां

यद्वैकैकं क्षिपथ जलधौ गण्डशैलोपलं वा ।

तेन श्वभ्रं भवति सकलोऽप्यम्बुराशिः स्थलं वा

तत्किं मिथ्या भजत विधुरं व्यस्ततन्द्राः कपीन्द्राः ॥२० ॥

धावत्प्लवङ्गपृतनाक्रवलक्रमेण
प्राप्स्याम्यहं सुहितता च रिपुक्षयं च ॥ ३७ ॥

रावणः । साधु वत्स साधु सत्यं मदनुजोऽसि ।

दुर्मुखः । देव उप्पाडिओ कुमारमेहणादस्स रहो * ।

सुमुखः ।

निश्चक्रचीत्कृतिरलब्धमहीतलत्वात्
तुण्णाम्बुदोदरपयोमयगर्भसारः ।
धूस्तुण्डघट्टनविवर्त्तितकृत्तलत्तः
पुत्रस्य ते गगनमुत्पतितो रथोऽयम् ॥ ३८ ॥

दुर्मुखः । पभञ्जणणन्दणोवि वाणरिन्दो अणुप्पाडिओ मे-
हणादस्स रहवरं † ।

सुमुखः ।

मेघोदरद्रुतपरिप्लुतमोचिताम्भाः
संस्तभ्यसप्ततुरगानरुणेन दृष्टः ।
वैमानिकैः स्तुत इतः क्षणमुक्तमार्गः
सौमित्रिणा सह खमुत्पतितो हनूमान् ॥ ३९ ॥

वामतः करङ्कः ।

दिग्मातङ्गैः कमठपतिना भोगिभर्त्रा च शङ्के
कृत्वा हृष्टां कथमपि धृता दूरतन्वी धरित्री ।
स्वप्राग्भागस्थगितगगने कुम्भकर्णे विनिर्या-
त्युच्चैर्नीतो दिनमणिरथस्त्रस्यता चारुणेन ॥ ४० ॥

* देव उत्पतितः कुमारमेघनादस्य रथः ।

† प्रभञ्जननन्दनोऽपि वानरेन्द्रोऽनूत्पतितो मेघनादस्य रथवरम् ।

नेपथ्ये । कः कोऽत्र भोः विज्ञाप्यतां देवो दशकण्ठस्तदिदं तत्रानुजः प्रतिजानीते ।

सीताप्रियं च दलितेश्वरकार्मुकं च
वालिद्रुहं च रचिताम्बुधिबन्धनं च ।
रक्षोहणं च विजिगीषुविभीषणं च
रामं निहत्य चरणौ तव वन्दिताहे ॥ ४१ ॥

रावणः । साधु वत्स कुम्भकर्ण साधु कथमन्यथा समरसीमनि रावणस्त्वत्प्रवणः ।

दक्षिणतो नेपथ्ये । सुमुखः । देव दृश्यतां क्षत्रियतापसव्यवसायः ।

पौलोमीकुचमिचयं हठेन हृत्वा
यः क्षिप्रा नृहरमटौघचामराङ्कः ।
त्वत्सूनोः शिखिरथकेतने च तस्मिन्
सौमित्रेः सपदि पतन्ति बाणदण्डाः ॥ ४२ ॥

पुनरवलोक्य । साधु भोः कुमारमेघनाद साधु साधु संक्रान्तकार्मुकोपनिषदाचार्याद्दशकण्ठतोऽसि ।
देव पुलस्त्यनन्दन ।

यन्मङ्गले स्नपितमञ्जनयाऽऽर्द्रनेत्र्या
यन्मारुतश्च परिचुम्बति कौतुकेन ।
न्यस्तः शरः शिरसि तत्र हनूमतोऽस्य
पुत्रेण ते रभसलङ्घितसागरस्य ॥ ४३ ॥

रावणः । तर्हि प्रतिकृतो लङ्कादाहपरिभवः कुमाराक्षवधपरिभवश्च वत्समेघनादेन ।

सुमुखः ।

यान्नर्मिलापतिरयं च तवात्मजश्च
बाणोत्करान् विकिरितो रचितान्धकारान् ।
तेऽन्योन्यखण्डनवशाद्विफलीभवन्ति
त्यत्सवे बधिरयोरिव कण्ठनादाः ॥ ४४ ॥

वामनः कङ्कालकः । किं पुण एस विडम्बिअहेरम्बगलगुञ्जारवो विणिज्जिदसङ्करकरप्फालिअगड्डमरडमरुअकोलाहलो कुण्ठअवेउण्ठसूयरघोरघक्कारप्पसरो णिउञ्जिअणरसिंहमुक्कपुक्कलवुक्कारवइणरो असेससद्दसंमद्दो सुणी अइ * ।

करङ्ककः । कर्णौ पिधाय देव यथाऽभिहितं कङ्कालकेन ।

कुर्वन्नुत्कर्णतालान् दिशिदिशि करिणो धौर्जटीनां जटानां
बन्धाहिग्रन्थिमुद्रां सपदि शिथिलयन् खण्डितोपेन्द्रनिद्रः ।
क्रन्दामो नन्दिवाद्यं मुरजमुखरतं भुग्नविश्वप्रमोदो
रोदोरन्ध्रं निरुद्ध प्रसरति किमिदं निष्ठुरज्यानिनादः ॥ ४५ ॥

रावणः । जाने वत्सस्य साम्मुख्यं भजता ज्याबन्धबन्धुरितं धनुरास्फालितं ज्येष्ठतापसेन ।

दक्षिणतो नेपथ्ये । सुमुखः । गगनाङ्गणचारिणोरुभयोरपि सायकैर्विचित्रमाचेष्टितं तथाहि ।

अमी पुरोऽभ्राणि विभिद्य पत्रिणः
प्रयान्ति धारासलिलैः सह क्षितिम् ।

---

* किं पुनरेष विडम्बितहेरम्बगलगुञ्जारवो विनिर्जितशङ्करकरास्फालितोड्डामरडमरुककोलाहलः कुण्ठितवैकुण्ठसूकरघोरघूत्कारप्रसरो निकुञ्जितनरसिंहमुक्तपुष्कलबुक्कारव्यतिकरोऽशेषशब्दसंमर्दः श्रूयते ।

वहन्त्यथैतानि च पश्य विश्वतः
पृषत्करन्ध्रैः स्थितयोरनुक्रियाम् ॥ ४६ ॥

अपि च । अत्रान्तरिक्षकुहो निरन्तरे शरव्यतिकरे ।

अन्तर्धाय परिक्रमन्ति सभियः सिद्धाः प्रसिद्धा अमी
नात्यर्थं च सुधाभुजो वयमिति त्रस्यन्ति नाकौकसः ।
दारानन्तरयद्भिरात्मवपुषा नष्टं च विद्याधरै-
रभ्यस्यन्ति च काण्डवारणकरीं विद्यां गणश्रेणयः ॥ ४७ ॥

वामतः कङ्कालकः । कहं परिअणसमप्पिअं प्पहरणसंदो-
हमवमणिअ पसरिओ कुम्भकणो * ।

करङ्कः । किमाह कुम्भकर्णः । आस्तां धनुरित्यादि पठति ।

रावणः । साधु वत्स साधु सत्यं मदनुजोसि तदुद्धृतं राव-
णहृदयशल्यम् ।

दुर्मुखः । हाहा किं एअं वट्टइ जदो सव्वदो सदसह-
स्सलक्खसंखा पज्जलन्ति हुयवहा जहं अ अञ्जणगिरिकुड-
विअडो पसरइ धूमुप्पीडो मेरुसिहरदीहरसिहाघट्टाविसट्टन्ति
जालाओ सञ्झारविमण्डलपज्जलङ्गा विप्फुरन्तिप्फुलिङ्गा † ।

रावणः ।

अनेन लङ्का यदकारि मत्पुरी
हनूमता गात्रगतेन भस्मसात् ।

---

* कथं परिजनसमर्पितं प्रहरणसंदोहमवमत्य प्रसृतः कुम्भकर्णः ।

† हाहा किमेतद् वर्तते । यतः सर्वतः शतसहस्रलक्षसङ्ख्याः प्रज्वल-
न्ति हुतवहा यथा चाञ्जनगिरिकूटविकटः प्रसरति धूमोत्पीडो मेरुशि-
खरदीर्घशिखासंघा विसरन्ति ज्वालाः संध्यारविमण्डलप्रज्वलाङ्गा विस्फु-
रन्ति स्फुलिङ्गाः ।

निजापराधप्रशमाय तद् ध्रुवं
निषेवितुं मामयमेति पावकः ॥ ४८ ॥

सुमुखः । देव पदातिलवस्तु सुमुखो ऽभिमन्यते लक्ष्मण-
दिधक्षया कुमारमेघनादेन प्रहितमाग्नेयमस्त्रं तत एव भुव-
नाप्लावः । अङ्गुल्या निर्दिशन् ।

सद्यः सिञ्चति विष्टराम्बुजमयं देवः श्रुतीनां कवि-
स्तारान्तःपुरवानुपैति गगनाच्चन्द्रा जलार्द्राकृतः ।
गङ्गा च द्युमणेः सुता च सरितावन्योन्यमाश्लिष्यतः
किंचास्त्रानलडम्बरे करिमुखः क्षीराब्धिमाधावति॥४९॥

अपिच ।

दुग्धाब्धेः क्वथनाविलं तत इतो धत्ते पयः पिण्डतां
शैलेन्द्रः प्रविलीनकृत्स्नतुहिनः पाषाणशेषः स्थितः ।
सान्द्राभिः करकाश्मवृष्टिभिरमी गर्भं त्यजन्त्यम्बुदाः
प्रोषार्तिं च समश्नुते रविरपि स्वाहापतेः पत्रिभिः ॥ ५० ॥

वामतः कङ्कालकः । देव पेक्ख दाव दावसमुब्भवदण्डको-
अण्डप्फालणाणन्तरं परिहरिअ पहरणाइं रहसुम्मूलिदतमाल-
मालं सहत्थब्भामिदपहरणसज्जसज्जं समुद्दागदहिन्तालताल
दूरुल्लासिदकुसुमपाडलपाडलं गअणन्दोलिदविसालसालं रह-
सुच्छलिदपडन्तकेसरकेसरं गहिदसव्वङ्गसरलसरल लोलिद-
कुसुमसंदणसंदणं पअट्टधरिदसव्वंसव्वंस पअण्डकरकोलि-
दपलासपलासं करजुअलबन्धरअवसप उन्तपीपलपीपलं णिसग्ग-
कठिणक्कक्करकक्करं णहप्पहारुक्खाअपत्थरपत्थरं पहरणीकदपड-

न्तगण्डगण्डसेल्लं सम्मुहोच्छलिदं प्पहारप्पबलं वाणरबलम् * ।

रावणः । का पुनरमीभिर्गणना शलभायन्ते कुम्भकर्णे वानरबलानि ।

दक्षिणतो दुर्मुखः । किं पुण एदं दसदिसापसरिदचउस्समुद्दं विअ जलअन्ताअन्तगिरिन्दसंदोहं विअ सलिलीभूदगअणवलअं विअ वारिसिद्विमेत्तपअट्टपआवइवावारं विअ भुवणब्भन्तरं वट्टदि † ।

सुमुखः । एवमेवैतत् ।

> न्यस्यत्कान्तिं हुतवह इव स्वर्गपद्माकराणां
> ज्वालाधौतान्यपि विशदयन्नग्निशौचांशुकानि ।
> रिक्ताभ्राणां भरणकरणे स्थान एव स्थितानां
> किं नामायं प्लवयति पुरो रोदसी वारिपूरः ॥ ५१ ॥

रावणः । विचिन्त्य मेघमनभ्रवृष्टिः । विमृश्य भवतु ज्ञातम् ।

> लक्षीकरोमि वरुणं न शरावलीनां
> वार्यन्त्रनां व्रणशतैर्यदयं बिभर्ति ।

* देव प्रेक्षस्व तावत् तापसभुजदण्डकोदण्डास्फालनानन्तरं परिहृत्य प्रहरणानि रभसोन्मीलिततमालमालं स्वहस्तभ्रामितप्रहरणसज्जसर्जं संमुखागतहिन्तालतालं दूरोल्लासितकुसुमपाटलपाटलं गगनान्दोलितविशालशालं रभसोच्छलितपतत्केसरकेसरं गृहीतसर्वाङ्गसरलसरलं लोलितकुसुमस्यन्दनस्यन्दनं प्रयत्नोद्धृतसर्वांशवंशं प्रचण्डकरकलितपलाशपलाशं करयुगलबन्धरयवशपतत्पिप्पलपिप्पलं निसर्गकठिनकर्करकर्करं नखप्रहारोत्खातप्रस्तरप्रस्तरं प्रहरणीकृतपतद्गण्डगण्डशैलं संमुखोच्छलितं प्रहारप्रबलं वानरबलम् ।

† किं पुनरेतद् दशदिशाप्रसृतचतुःसमुद्रमिव जलयन्त्रायमाणगिरीन्द्रसंदोहमिव सलिलीभूतगगनवलयमिव वारिसिद्धिमात्रप्रवृत्तप्रजापतिव्यापारमिव भुवनाभ्यन्तरं वर्तते ।

मोक्तुमहाकरुणयेत्युपकारिणो मे

सीतावियोगदवथुं स हि मार्ष्टि कृष्णा ॥ ५२ ॥

सुमुखः । अहं पुनर्जाने चैत्रभानवमस्त्रमवर्जेतुं वारुणबाणप्रवणो लक्ष्मणः ।

कङ्कालकः । अध तत्थ केवि कद्दणो कुम्भअण्णस्स चण्डिलणहसिहरेहिं खण्डिदकआ वराहा विअ पाएसु पडन्ति उपणिमन्तिणोव्व जङ्घासु लग्गन्ति पुरिमकडिलग्गपडव्व ऊरुसु मव्वन्ति अस्सवारकरवालव्व णिअम्बविम्बे दोलन्ति सुअणव्व मज्झत्था होन्ति विहुरकुडुम्बव्व पासेसु चिट्ठन्ति तरुणीथणव्व वच्छत्थले वित्थरन्ति वेणिदण्डव्व पुट्ठिट्ठाणे घोलन्ति चिरमिलिअबन्धवव्व कण्ठे लग्गन्ति कवोलगलिअजलबिन्दुव्व चिवुअग्गे ललन्ति चुम्बणरसिअव्व अहरं पीडअन्ति सुरहिपरिमलव्व जहिच्छं नासाविवरेसु सञ्चरन्ति सुहासिअव्व कण्णेसु पइसन्ति सिविणअव्व अच्छीसु लम्बन्ति पट्ठाणतिलअव्व भाले विप्फुरन्ति णीचव्व समालम्बिदा सीसे समारुहन्ति भुअङ्गाव्व केसगाहे अहिरमन्ति * ।

* अथ तत्र केऽपि कपयः कुम्भकर्णस्य चण्डिलनखशिखरैः खण्डितकचा वराहा इव पादयोः पतन्ति उपनिमन्त्रिता इव जङ्घासु लगन्ति पुरुप्रकटिलग्नपटा इवोर्वोर्मर्व्वन्ति अश्ववारकरवाला इव नितम्बबिम्बे दोलन्ति सुजना इव मध्यस्था भवन्ति विधुरकुटुम्बा इव पार्श्वयोस्तिष्ठन्ति तरुणीस्तना इव वक्षस्थले विस्तरन्ति वेणीदण्डा इव पृष्ठस्थाने घूर्णन्ति चिरमिलितबन्धव इव कण्ठे लगन्ति कपोलगलितजलबिन्दव इव चुबुकाग्रे ललन्ति चुम्बनरसिका इवाधरं पीडयन्ति सुरभिपरिमला इव यथेच्छं नासाविवरयोः संचरन्ति सुभाषितमिव कर्णयोः प्रविशन्ति स्वप्ना इवाक्ष्णोर्लम्बन्ते प्रस्थानतिलका इव भाले विस्फुरन्ति नीचा इव समालम्बिताः शीर्षे समारोहन्ति भुजङ्गा इव केशपाशे ऽभिरमन्ते ।

रावणः । अथ प्लवङ्गयूथपतिषु किं कुरुते कुम्भकर्णः ।

कङ्कालकः । तदो तेण ताणं मज्झे केवि हदा पादेहिं कुप्परिदा कुप्परपहारेहिं कीलिदा कीलेहिं सक्करीकदा करसंपुडुप्पीडणेण अप्फालिदा तलप्फालेहिं चप्पडिदा चवेडाहिं णिव्वाविदा मुट्ठीहिं वधिदा अ चलणेहिं * ।

करङ्कः । एवमेवैतत् ।

मुष्ट्या पिनष्टि मुद्गरैश्च तलैस्तृणेढि
पद्भ्यां निशुम्भति करेण च हन्त हन्ति ।
तूर्णं च कर्णमतिकुर्प्यति कूर्पराभ्या-
मस्त्रायितावयव एष तवानुजन्मा ॥ ५३ ॥

सुमुखः । जलपीडापगमर्मभिनीय देव द्विष्ट्या युगपत्स्वपरबलविनाशशङ्कितेन सौमित्रिणा संहृतं वारुणमस्त्रं तथाहि ।

ज्वालापल्लवितो भवत्यतितरां नाप्याप्ययं पावकः
संवृत्तो रणरेणुधूसरवपुः स्नात्वा रविर्भास्वरम् ।
शान्तः स्याणुविलोचने च विषमच्छात्कारनादो महान्
प्रक्षाल्याम्बरमुर्वरां च विरते दिव्यास्त्रजे वारिणि ॥ ५४॥

वामतः करङ्कः ।

नासारन्ध्रनिरोधतः श्रवणयोश्छिद्रद्वयाच्छादना-
च्चक्षुःसंपुटघट्टनान्मुखमहाव्यादानसंकोचनात् ।
दोर्मूलद्वयपीडनाच्च कुरुते क्रुद्धस्तवात्रानुजो
दिङ्गातङ्गपराक्रमानपि कपीन् हाहारवस्यास्पदम् ॥५५॥

---

* ततस्तेन तेषां मध्ये केऽपि हताः पद्भ्यां कूर्परिताः कूर्परप्रहारैः कीलिताः कीलैः शर्करीकृताः करसंपुटोत्पीडनेनास्फालितास्तलास्फालैश्चिपिटीकृताश्चपेटाभिर्निर्वापिता मुष्टीभिर्व्यथिताश्च चरणाभ्याम् ।

अपि च लङ्कापते पौलस्त्य ।

धुतानां भवतो भ्रात्रा कपीनां तनुकम्पनः ।

रोमावलम्बनभ्रष्टा विनष्टाः पञ्च कोटयः ॥ ५६ ॥

दक्षिणतो दुर्मुखः सत्रासं । किं पुण बहलतेल्लकल्लविद्ध-कज्जलविलित्तं विअ तरुणतापिच्छच्छोलिच्छणं विअ स-सलिलजलअजालमालिदं विअ सिदिकण्ठकण्ठप्पहापिहिद विअ अवणुण्णणारात्रणकन्तिसव्वस्सं विअ जमममहिमविसा-णेहिं क्खिण्ण विअ हेरम्बदाणकद्दमकरम्बिअं विअ भुवणङ्गण वट्टदि * ।

रावणः । ननु क्व पुनस्तमस्काण्डैकचण्डो मार्तण्डो वर्तते । विचिन्त्य विहस्य च ।

आराममपलक्ष्मणं भुवनमद्य निर्वानरं

विधाय शरवोर्मिभिर्नियतमिन्द्रजिद्रोपितः ।

जिघांस्यति स मां गुरुं रघुभुवामितीव क्वचि-

द्भिया दिनकरे गते त्रिजगदेतदन्ध स्थितम् ॥ ५८ ॥

भूयो विहस्य तदहो दिनकरः क्व न दृश्यते वत्समेघनादस्य,

दक्षिणतः सुमुखः। देव पदातिलवस्तु दुर्मुखो मन्यते। रणाङ्ग-णचारिणो वैरिणोऽन्धीकरणकारणतामिस्त्रमस्त्रमवतारितं युव-राजेन्द्रजिता यतः ।

चक्रद्वन्द्वैर्विरहकलनाकातरैर्दीनदृष्टो

दत्तास्वस्थ्यः कुवलयदृशां साभिसारव्रतानाम् ।

---

* किं पुनर्बहलतैलमिश्रितकज्जलविलिप्तमिव तरुणतापिच्छकान्ति-च्छन्नमिव ससलिलजलदजालमालितमिव शितिकण्ठकण्ठप्रभापिहितमि-वावनुन्ननारायणकान्तिसर्वस्वमिव यममहिषविषाणाभ्यां कीर्णमिव हेरम्ब-दानकर्दमकरम्बितमिव भुवनाङ्गणं वर्तते ।

दृष्टैर्वल्यं विदधदधिकं हस्तहार्यान्धकारो
राजावर्तद्युतिविरचितां क्ष्मां च खं चातनोति ॥ ५८ ॥

वामतः कङ्कालकः । तथा अ दूढदहिज्जन्तकलेवरं जज्ज-रिज्जन्तमवलोइअ पवङ्गवग्गं पधाविदो समं दलिदञ्जणणी-लेण णीलेण रहसुग्गीवो सुग्गीवो किदा अ सरलीकदभुअदण्ड-मण्डले सुवेलसेलमूलादो उप्पाडिअ णिज्झरजम्बालपिच्छिला सिला * ।

कङ्कः । यथाऽभिहितं कङ्कालेन ।

अश्रोणितम्बफलकस्य नरोत्तमानां
वक्षःस्थलस्य च दधत्युपमानमुद्राम् ।
भ्रातुस्तवात्र हृदि साहसकेलितल्पे
प्रक्षिप्यते हरिनरेण शिलेयमुर्वी ॥ ५९ ॥

रावणः । विहस्य तदिदं मृणालकाण्डेन गण्डशैलताडनम् ।

कङ्कः । कथं क्षिप्तेव । रावणमुद्दिश्य ।

संग्रामभीषणविभीषणपूर्वजस्य
मुष्ट्या दृढं शकलिताद्य तथा शिलेयम् ।
खण्डं यथा पतति मेदुरमुर्वरायां
दृष्टं तदम्बुजपरागकणप्रमाणम् ॥ ६० ॥

रावणः । विहस्य त एवं वर्ण्यन्ते येभ्यः कुप्यति कुमार-कुम्भकर्णः ।

* तथा च दृढदह्यमानकलेवरं जर्जरितमवलोक्य प्लवङ्गवर्गं प्रधावितः समं दलिताञ्जननीलेन नीलेन रभसोद्ग्रीवः सुग्रीवः कृता च सरलीकृतभुजदण्डमण्डले सुवेलशैलमूलादुत्पाट्य निर्झरजम्बालपिच्छिला शिला ।

दक्षिणतो दुर्मुखः । अच्छरिअं किं पुण एदे णासन्तणी-रन्धन्धआरा प्फुरन्तससिकन्तमणिणो विसट्टन्तकन्दोट्टवलआ संप्फुडिदपुडइणीकुसुमा सरसाअमाणपाणगोट्ठिणो णिट्ठवि-ज्जन्तमाणंमिणीमाणा णिसिज्जन्तवम्महसिलीमुहा भमन्तम-अणुमत्तकामिणीसत्था दिउणरोवाविदविरहिणीणअणा तिउ-णहरिसाविदवल्लहसङ्गदङ्गणा चउग्गुणपच्चाविदपरिहरिअ-पिअप्पसाअणप्पणामा पञ्चउणपअदाविदसुरअमोहिदमिहु-णा अ समन्तदो मिअङ्का वट्टन्ति * ।

रावणः । सोल्लासमाकाशे । भोः मेवाविदग्ध सुधादीधिते जानासि लङ्केश्वरमाराधयितुम् ।

सदा दिगन्तस्थितसान्द्रचन्द्रिकाः
सुखाय नक्तञ्चरचक्रवर्तिनः ।
इति स्थितोऽयं बहुभिः स्वमूर्तिभि-
र्दिवाऽपि मां शीतरुचिर्निषेवितुम् ॥ ६१ ॥

सुमुखः । देव चिन्तयामि तामिस्रमस्त्रं तिरयितुं चान्द्र-मसमायुधमाहूतं सुमित्रापुत्रेण यतः ।

कन्दर्पस्य प्रथमसुहृदः क्षोभयन्तोऽम्बुराशीन्
शेफालीनां धुतसुमनसो लीढभासश्चकोरैः ।

---

* आश्चर्यं किं पुनरेते नाशितनीरन्ध्रान्धकाराः स्फुरच्छशिकान्तमणयो विकसत्कमलवलयाः संस्फुटितकमलिनीकुसुमाः सरसायमानपानगोष्ठ्यो निस्तापितमनस्विनीमाना निषिध्यमानमन्मथशिलीमुखा भ्रमन्मदनोन्मत्त-कामिनीसार्था द्विगुणरोदितविरहिणीनयनाः त्रिगुणहर्षितवल्लभसंगताङ्ग-नाश्चतुर्गुणप्रत्यावितपरिहृतप्रियप्रसादनप्रणामाः पञ्चगुणप्रकटितसुरत-मोहितमिथुनाश्च समन्ततो मृगाङ्का वर्तन्ते ।

निर्यान्त्येते विशिखमुखतः पश्य राकामृगाङ्काः
पङ्कश्यामं तिमिरशिबिरं दूरमुत्सारयन्तः ॥ ६२ ॥

करङ्कः । देव शिलोद्भलनवैलक्ष्ये ।

उद्वेल्लितोरगजनोज्झितचन्दनेन
कर्पूरपादपसरद्भ्रमनिर्भरेण ।
खण्डेन देव मलयस्य वलीमुखेन्द्रो
हेलोद्धृतेन निजिघांसति कुम्भकर्णम् ॥ ६३ ॥

रावणः । अहो मर्कटकीटस्याध्यवसायः ।

दक्षिणतो दुर्मुखः । रक्खसेसर पेक्ख णिअगहणसंकासङ्कुइदन्त बिम्बचन्दरविणो बहुराहुदंसणचमक्कन्तकामिणीदिण्णबिसण्णच्छिविक्खोहभग्गपल्लत्थङ्कुलीकिसलअसमुण्णोसिदा अप्पसण्णवअणरत्तीसूइदा चमक्किदचन्दन्तेउरवित्थरन्तविविहबहुवह्मघोसा भुवणुद्देसा दीसन्ति * ।

रावणः । सविमर्शम् ।

ममासुरस्य त्रिदशाः परं द्विषो
विबाधयिष्ये दशकन्धरेण तान् ।
इहेति मां राहुरयं सबान्धवो
रणेऽद्य पूर्वापचिकीर्षुरागतः ॥ ६४ ॥

आकाशे । स्वर्भानो मा भैषीः शरणार्थिनामभयकारणं रावणः ।

---

* राक्षसेश्वर प्रेक्षस्व निजग्रहणशङ्कासङ्कुचद्बिम्बचन्द्ररवयो बहुराहुदर्शनचमत्कृतकामिनीदत्तविसर्वाचिविक्षोभभग्नपर्य्यस्ताङ्गुलीकिसलयसमुत्थापिता अप्रसन्नवदनरात्रिसूचिताश्चमत्कृतचन्द्रान्तःपुरविस्तरद्विविधबहुब्रह्मघोषा भुवनोद्देशा दृश्यन्ते ।

सुमुखः । शङ्के श्वेतांशवमायुधं बाधितुं राहवीयमस्त्रमिदमुदीरितं देवयुवराजेन यतः ।

रयचलितविमानैः स्वर्गिभिर्मुक्तमार्गा
ग्रहचरितविदां च व्यञ्जितातङ्कमुद्राः ।
ग्रहणशतसहस्रोल्लासनासूत्रधाराः
प्रतिशशि शितदंष्ट्रा राहवः संपतन्ति ॥ ६५ ॥

वामतः करङ्कः ।

अत्रान्तरे त्वदनुजेन धनुर्विधूय
संधानकर्मणि कृतश्च समीरबाणः ।
सार्धं महीध्रशकलेन सुवेलमूला-
द्वारां निधौ निपतितः कपिचक्रवर्ती ॥ ६६ ॥

रावणः । सहर्षक्रोधं तर्हि सलिलेन्धने वडवावाहुतीभूतः ।

करङ्कः ।

यावच्च पाणिमपि संवृणुते ऽनुजस्ते
यावन्न शाम्यति च धिक्करणं सुराणाम् ।
तावत्पयोधिमुदधेः प्रथमः कपीना-
मस्य स्थितस्तडिति ताडितदोः पुरस्तात् ॥ ६७ ॥

रावणः । स्वगतम् । वेगवत्तया वालिनमप्यतिशेते । विचिन्त्य प्रकाशम् । प्रतिप्रधानैव वानरजातिः ।

दक्षिणतो दुर्मुखः । लङ्कापरमेसर पेक्खपेक्ख कोत्थुहमणिणिवेसलञ्छिदवच्छत्थलवणमालाप्पालम्बचुम्बणागदद्दिव्वम - हुअरमञ्जुगञ्जारवविकिण्णकण्णा गरुडप्पहापुञ्जपिञ्जरिदरोदसीगम्भवित्थारा णिज्जिददलिदिन्दीवरदामकन्तिणो आ-

अण्णाअट्ठिअसारङ्गधारिणो मुरारिणो संचरन्ति* ।

रावणः । ससंभ्रमम् ।

अयं हि सेवारचितार्द्रमानसो
न वत्सो मे कमलां हरिष्यति ।
इति स्वशक्त्या कृतमूर्तिविस्तरै-
रजोऽपि मां रञ्जयितुं समागतः ॥ ६८ ॥

आकाशे हंहो नारायण न प्रणतदारापहारी दशकण्ठः ।

सुमुखः । देव संभावयामि सैंहिकेयहेतिविहतये वैष्णवं प्रहरणमिदं विस्फारितं लक्ष्मणेन यतः ।

लक्ष्मीकण्ठग्रहणरसिकाः संचरत्पाञ्चजन्य-
ध्वानश्रेणीभरितककुभो दोर्भिरुच्चैश्चतुर्भिः ।
आमन्त्यन्तर्भुवनभवनं विष्णवो जिष्णवोऽमी
श्यामाश्चक्रग्रहणमद्राहुसंहारकाराः ॥ ६९ ॥

वामतः कङ्कालकः । पुरो भूदेण मगवत्तिणा वाणरवीरेण तक्खणमज्जिज्जंतकुम्भअण्णबाणासणमक्किवविअ खित्तं धरणिपिट्ठे रोसभरविभत्तमज्जिट्ठाए दिट्ठीए दट्ठूण देवकण्णट्ठेण मुक्का चक्कावली पअदिदा पट्टिसा पेसिदा दंसिदमारणवेअट्टी भुसुण्डी खित्ता थीसङ्कु सङ्कुमाला आक्खित्तं मोगारोणिअणं उप्फेरिदपुलअफारपअक्कमेण कम्पाविदो करगलग्गो खग्गो वाणचक्कवट्टिणा वि परिहरिआउहकडप्पेण णिउक्कं अक्कवसिअ अप्फोडिदो भुअदण्डो किलिकिलिदं अ सट्टमंदोहभरिअभुअ-

* लंकापरमेश्वर प्रेक्षस्व प्रेक्षस्व कौस्तुभमणिनिवशलाञ्छितवक्षःस्थलवनमालाप्रालम्बचुम्बनागतदिव्यमधुकरमञ्जुगुञ्जारवविकीर्णकृष्णागरुडप्रभापुञ्जपिञ्जरितरोदसीगर्भविस्तारानिर्जितदलितेन्दीवरदामकान्तय आकर्णाकृष्टशार्ङ्गधारिणो मुरारयः संचरन्ति ।

णन्तरं पधाविदाओ संदंसणकोदूहलफुल्लगल्लफलआओ सुर-
सुन्दरीओ समारूढो लङ्कापुरीपाआरसिहरेसु णिसाअरजणो
वसुधाणिवेसिदसिलासंघादेण वाणरलोएण पासमंठाविदवि-
विहाउहेण रक्खसवग्गेण अ अङ्गीकदमुदासीणत्तणं तदो
दो वि समं वणिअअलीणा मल्लजुज्झेण तहिं अ गाढअरं ह-
त्थग्गहं मग्गन्ति सिरेण सिरणिवेसिणो हुडुक्कविक्कमेण परि-
क्कमन्ति कक्कवाबन्धविणिहितहत्था उक्कलन्ति भुअदण्डसद-
सेण कन्धरां धरन्ति जङ्घन्तरकत्तरीहिं पीडन्ति कुक्कुडभडप्पे-
हिं भिल्लन्ति डुक्करेहिं डुक्कन्ति अप्फोडणिरिक्कपाअप्पक्खवेण
केवलं करिसन्ति केसेसु ण णअणाइं हणन्ति ण णासावंसे प-
हरन्ति ण दलन्ति दन्तेहिं ण खण्डन्ति नखेहिं एदाण च पड-
णुप्पडणेसु उप्पडन्ति सत्तसाअरा गलन्तगण्डसेला होन्ति कु-
लसेला दिक्करिकादरत्तणप्पमुक्कचिक्कारपरिदा घुण्णदि वसु-
न्दरा पडिखो हणणमन्तधरित्तीभारवङ्किदखन्धरो कम्पदि
महाकुम्मो ता जुज्झदि देवस्स धणुग्गहो * ।

रावणः । विहस्य का पुनरेषा द्वन्द्वयुद्धमर्यादा ।

---

* पुरोभूतेन मार्गवर्तिना वानरवीरेण तत्क्षणसज्ज्यमानकुम्भकर्णबा-
णासनमाक्षिप्य क्षिप्तं धरणीपृष्ठे । रोषभरमञ्जिष्ठया दृष्ट्या दृष्ट्वा
देवकनिष्ठेन मुक्ता चक्रावली प्रवर्तिताः पट्टिशाः प्रेषिता दर्शितमारणपेशला
भुशुण्डी क्षिप्ता निःशङ्कं शङ्कुमाला आक्षिप्तं मुद्गराद्गाणाम् उत्प्रेरितपुलक-
स्फारपदक्रमेण कम्पितः कराग्रलग्नः खड्गः । वानरचक्रवर्तिनाऽपि परि-
हृतायुधकलापेन नियुद्धमध्यवस्यास्फोटितो भुजदण्डः किलकिलितं च श-
ब्दसन्दोहभरितभुवनान्तरं प्रधाविताः सन्दर्शनकौतूहलफुल्लगल्लफलकाः
सुरसुन्दर्यः समारूढो लङ्कापुरीप्राकारशिखरेषु निशाचरजनो वसुधानिवे-
शितशिलासंघातेन वानरलोकेन पार्श्वसंस्थापितविविधायुधेन राक्षसवर्गेण
चाङ्गीकृतमुदासीनत्वम् । ततो द्वावपि समं वल्गितकर्णौ मल्लयुद्धेन
तदा च गाढतरं हस्तग्राहं मार्गते शिरसा शिरोनिवेशिना हुडुक्कविक्रमैः

दक्षिणतो दुर्मुखः । एदे पअट्टिदणट्टईविब्भमणच्चा सुस-
द्दीकदकादम्बरीपाणविहिदुम्मादा जुवदीकदजरदीजणा उप-
णीदकुसुमबाणप्पअरा विरहिणीकण्ठवड्ढिदपञ्चमतरङ्गा मिअ-
ङ्कबालमित्ता दूदीकददक्खिणसमीरणा सव्वदो संचरन्ति म-
दणा † ।

रावणः । सहर्षम् ।

यावन्ति लोकहृदयानि जगत्त्रये ऽत्र
तावद्भिरैरनुगतो मदनैर्मनोभूः ।
शम्भोर्भिया भगवतः शरणाय शङ्के
मां रावणं समरचण्डभुजं प्रपन्नः ॥ ७० ॥

आकाशे । हे मकरध्वज मदनुग्रहेण मत्परिग्रहेण च न त्वां
देवदेवोऽपि बाधिष्यते ।

सुमुखः । जाने वैष्णवमस्त्रं स्तम्भयितुं पौष्पकेतनमायुध-
मातन्यते मन्दादरोनन्दनेन यतः ।

चिह्नोत्सङ्गस्फुरितमकराः पुष्पधन्वान एते
द्राक् तन्वन्तो मधुसहचरं पञ्चमं रागराजम् ।

---

परिक्रामतः । कत्ताबन्धविनिहितहस्तायुच्छलतः । भुजदण्डसंदंशेन कन्धरां
धरतः । जङ्घान्तरकर्त्तरीभ्यां पीडयतः । कुक्कुटस्पर्शैर्मलतः । हुत्कारैर्हुत्कु-
रुतः । आस्फोटतिर्यक्पादप्रक्षेपेण न केवलं कर्षतः केशेषु । न नयने घ्नतः ।
न नासावंशे प्रहरतः । न दलतो दन्तैः । न खण्डयतो नखैः । एतयोश्च
पतनोत्पतनेषूत्प्लवन्ति । गलद्गण्डशैला भवन्ति कुलशैलाः । दिक्करिकात-
रत्वप्रमुक्तचीत्कारपूरिता घूर्णति वसुन्धरा । प्रतिक्षोभणनमद्धरित्रीभारव-
क्रितकन्धरः कम्पते महाकूर्मः । तद्युज्यते देवस्य धनुर्ग्रहः ।

† एते प्रकटितनर्तकीविभ्रमनृत्याः सुस्वादीकृतकादम्बरीपानविहितो-
न्मादा युवतीकृतजरतीजना उपनीतकुसुमबाणप्रकरा विरहिणीकण्ठवर्द्धि-
तपञ्चमतरङ्गा मृगाङ्कबालमित्रा दूतीकृतदक्षिणसमीरणाः सर्वतः संचरन्ति
मदनाः ।

लक्ष्मीलीलाललितचरितैरच्युतान् वञ्चयित्वा
श्वेतद्वीपं रतिरतिकृतो मन्मथाः प्रापयन्ति ॥ ९१ ॥

वामनः कङ्कालकः । सव्वङ्गसंङ्गुदणिबिडणिपीडणापरव्व-
सगात्तपडन्तभुअबलेण गअणङ्गणे अन्दोलिअ कुमारकुम्भअ-
ण्णेण धरणिवट्ठे तडिदि ताडिदो सुग्गीवो * ।

रावणः । सहर्षम् । तर्हि मत्तकरेणुकरगतस्य कदलीकन्दस्य
दशां लम्भितः ।

करङ्कः ।

कक्षापञ्जरदात्यहं कपीनां चक्रवर्तिनम् ।
कृत्वा त्वदनुजो ऽभ्येति दिष्ट्या त्वं देव वर्धसे ॥ ९२ ॥

रावणः । स्वगतम् ।

यदर्थितं प्राज्यबलेन वालिना
विधाय दोर्मूलवशं दशाननम् ।
तदुद्धृतं शल्यमनेन मानिना
विधाय कक्षाकुहरे हरीश्वरम् ॥ ९३ ॥

कङ्कालकः । कुम्भअण्णकक्खन्तरगदं सुग्गीवमवलोइअ रह-
सझणक्किअरसणाणेउरकेऊरं णच्चिदुं पउत्ताओ सअलविंदा-
रअविन्दबन्दिसुन्दरीओ ता पेक्खदु देवो † ।

रावणः । सहर्षम् ।

किं शच्या परतो रतिर्धनपतेर्दूरे भवन्तु स्त्रिय-
श्चन्द्रान्तःपुरमेतदस्तु च पृथक्कौबेरिणोषूत्सवः ।

* सर्वाङ्गसङ्गतनिबिडनिपीडनापरवशगतः प्रचण्डभुजबलेन गगनाङ्गणे आन्दोल्य कुमारकुम्भकर्णेन धरणीपृष्ठे तडिति ताडितः सुग्रीवः ।

† कुम्भकर्णकक्षान्तरगतं सुग्रीवमवलोक्य रभसझणत्कृतरशनानूपुरकेयूरं नर्तितुं प्रवृत्ताः सकलवृन्दारकवृन्दबन्दिसुन्दर्यः । तत्प्रेक्षतां देवः ।

साकं शक्रजितः कलत्रनिवहैः सार्धं च दारैर्मम
प्रोत्युन्नामितपाणिपल्लवयुगं मन्दोदरी नृत्यतु ॥ ७४ ॥

इति गतो दुर्मुखः। किं पुण एदे ते पेक्खोल्लिलखट्टङ्गा बहु-
लपअट्टट्टहासा प्पसहमुक्कडक्कारडामरा णच्चन्तरहस्सुत्तालवेआ-
ला चमक्कंतसुरासुरपुरन्धिणो ललन्तच्चूडामणिचन्दखण्डा खल-
खलन्तवेल्लिदामरकल्लोलिणीपवाहा तडतडिदिताडिडुडुमरड-
मरुअरवरौद्दा खणखणिदिदाहिणमुहकुहरगम्भणिविडमिलिद-
जरठदाढा रोसफुक्कारपुल्लिदफणाभारहाराहिहारिणो पअण्ड-
रूअधारिणो चण्डीसा संचरन्दि * ।

रावणः । सहर्षम् ।

मह्यं तदा धृतमुदा शशिशेखरेण
दत्तो वरो न शिरसां सदृशश्छिदा यः ।
तत्सांप्रतं स भगवान् कृतभूरिमूर्ति-
रभ्यागतः पुनरनुग्रहवाञ्छया माम् ॥ ७५ ॥

सुमुखः । देव संभावयामि कन्दर्पबाणविहतये खाण्डपरश-
वमस्त्रमातन्यते तृतीयेन दाशरथिना यतः ।

ऊर्ध्वातिक्रीडकुण्डोल्लसितहुतवहज्योतिरुज्जम्भणाभिः
कुर्वन्तो देहदाहं पुरमथनमनोन्माथिनां मन्मथानाम् ।

---

* किं पुनरेते ते प्रेङ्खोलितखट्वाङ्गा बहलप्रकटाट्टहासाः प्रसभमुक्त-
डात्कारडामरा नृत्यद्रभसोत्तालवेतालास्त्रस्तसुरपुरन्ध्रयो ललच्चूडामणिच-
न्द्रखण्डाः खलखलायमानवेल्लितामरकल्लोलिनीप्रवाहास्तडतडितितडि-
ताडुमरडमरुकरवरौद्राः खणखणितदक्षिणमुखकुहरगर्भनिबिडमिलज्जर-
ठदंष्ट्रा रोषफूत्कारपूल्लितफणाभारहाराहिधारिणः प्रचण्डरूपधारिणश्च-
ण्डीशाः संचरन्ति ।

चूडाबद्धार्धचन्द्राश्चलसुरसरितो भूषिताः पन्नगेन्द्रैः
श्रीकण्ठाः श्यामकण्ठाः प्रणतसुरशताः साट्टहासाश्चरन्ति॥७६॥

रावणः। भगवन् भर्ग स्वल्पकण्ठवनच्छेदसाहसमनल्पःप्रसादः।

वामतो नेपथ्ये करङ्कः।

वेगोत्खातान्त्रतन्त्रीचयचलचरणः सज्वरद्धन्तयन्त्र-
प्रान्तग्रस्तोरुनासासरणिरुणद्धक् लुप्यतः कुम्भकर्णात्।
लूनव्याकीर्णकर्णः खरनखशिखरैरेव शाखामृगेन्द्र-
स्त्वङ्गल्लाङ्गलयष्ट्या तडतडिति शिरस्ताडयन् खं प्रपन्नः॥७७॥

रावणः। सविषादम्। अहो प्रमादः छलप्रहारित्वं वानराणां नावधारितं वत्सेन।

कङ्कालकः। एस सुग्गीवो कुमारकुम्भअण्णं विच्छिन्नमवक्करिअ गअणं उप्पअन्तो गदो ज्जेव्व तावससआसम् *।

करङ्कः। कपिचक्रवर्तिचापलकोपितश्च मध्यमपौलस्त्यः समरसमारम्भमेव शरणं मन्यमानो लङ्कापुरीगोपुरादुपावृत्तः संमुखीभूतश्चास्य सकलवाहिनीपरिवृतः स्वयमेव तापसः।

कङ्कालकः। पुरदो ऽवसरिअचउद्दिसंपरिवुदो वानरसेणावदीहिं तस्स पुरदो जम्बवन्तमणिमन्तमहामुहदुस्सहप्पहुदिणो दीदा रिक्खाहिवा गअगवअगवक्खऋडक्खपुरस्सरा पच्छादो गोलाङ्गुलबलाधिवा दहिमुहदरीमुहदुम्मुहप्पहाणा वामदो स-

---

* एष सुग्रीवः कुमारकुम्भकर्णं विच्छिन्नमवकृत्य गगनमुत्पतन् गत एव तापससकाशम्।

रभकेसरिकिसोरप्पमुहा पदक्खिणदो हविअ वलिदुं पउत्ता * ।

रावणः । सोऽयं पिपीलिकापत्तगन्यायः ।

कङ्कालकः । तदो अ मोग्गरपहारपरम्पराहिं मुच्छाविअ-
अतिरिक्छभल्लो णिरग्गलगिलिदगोलंगूलवग्गो चुण्णिअवाण-
रवाहिणीसण्णिवेसो पअदो तावसाभिमुहं समासादितमुच्छा-
विदेहिं च तेहिं चउद्दिसं अक्कामिज्जन्तो णीरन्धरोसन्धआ-
रन्धदाए समं पासससरिदेण णिअपरिअणेण विविहवलीमुहाणं
कवलकेलिकम्मणि पअट्टो † ।

नेपथ्ये । देव दाशरथे त्वर्यतां वानरपरित्राणाय ।

दिङ्मातङ्गशिरस्तटीचिपिटिनं प्रेतप्रभोः सैरिभे
भूयो दर्शितशृङ्गभङ्गविपदं बिभ्रन्महामुद्गरम् ।
घोणाशोणितसारणीकवलनक्षीबो ऽमरप्रेयसी-
हासः स्वांश्च परांश्च खादति रणे नक्तंचरेन्द्रानुजः ॥६८॥

रावणः । अहो अतृप्तिः अध्यवसायश्च वत्सस्य ।

काङ्कः । देव दोर्बन्धबन्धुरितधनुर्दाशरथिरभ्यर्णो वर्तते-

---

* पुरतोऽपसृत्य चतुर्दिशं परिवृतो वानरसेनापतिभिः । तस्य पुरतो जाम्बवन्नीलमन्महामुखदुःसहप्रभतयः स्थिता ऋक्षाधिपाः । गयागवयगवाक्षकटाक्षपुरःसराः पश्चाद् गोलाङ्गूलबलाधिपाः । दधिमुखदरीमुखदुर्मुखप्रधाना वामतः । शरभकेसरिकिशोरप्रमुखाः प्रदक्षिणतो भूत्वा वलितुं प्रवृत्ताः ।

† ततश्च मुद्गरप्रहारपरंपराभिर्मूर्छायितातिरिक्ताक्षभल्लो निरर्गलगिलितगोलाङ्गूलवर्गश्चूर्णितवाहिनीसन्निवेशः प्रवृत्तस्तापसाभिमुखं समासादितमूर्छाविच्छेदैश्च तैश्चतुर्दिशमाक्रम्यमाणो नीरन्ध्ररोषान्धकारान्धतया समं पार्श्वसरितेन निजपरिजनेन विविधवलीमुखानां कवलकेलिकर्मणि प्रवृत्तः ।

कुम्भकर्णस्य कुम्भकर्णेनापि गुरुमुद्गरचूडामणिः पाणिरनणीयानुत्तम्भितस्तापसवधाय ।

रावणः । अभङ्गुरः सङ्गरः सदा मे वत्सस्य ।

करङ्कः । हाहा धिक्कष्टम् ।

हस्तः स्थितो नभसि शत्रुजिघांसयैव
मत्ताङ्गनातिलकदानविधानदक्षः ।
उद्दामरामशरखण्डनतः प्रकोष्ठात्
पृष्ठे भुवो निपतितः सह मुद्गरेण ॥ ७९ ॥

कङ्कालकः । देव पाणी विश्र बाहुदण्डो वि से खण्डिओ * ।

रावणः । सास्रम् ।

मूर्च्छानमत्प्लवगपुङ्गवरक्तसिक्तः
स्वर्दन्तिदन्तवलयैः कृतकङ्कणश्रीः ।
आमूलतो मदनुजस्य भुजो भुजङ्ग-
भीमाकृतिर्झटिति हा नृशरेण लूनः ॥ ८० ॥

इति मूर्च्छति ।

करङ्कः । समाश्वसितु देवो वामपाणिप्रणीतमुद्गरः किमपि दुर्मदो राममाक्रामति तवानुजः ।

रावणः । किञ्चिदुत्थायावलोकयति ।

नेपथ्ये ।

एतद्विलूनमिषुणाऽर्धविधूपमेन
लङ्केश्वरानुजशिरो दशनार्दितोष्ठम् ।

---

* देव पाणिरिव बाहुदण्डोऽप्यस्य खण्डितः ।

संस्कारसंकलितकोपकषायगण्डं
चण्डाश्चितभ्रु पतति स्थिरदृष्टि रामे ॥ ८१ ॥

सर्वे क्षोभं नाटयन्ति ।

पुनर्नेपथ्ये ।

सद्यो राक्षमभल्लभल्लदलितग्रीवाप्रकाण्डं पत-
च्छिद्रालोद्दहिणप्रणप्लुतमद्गदंष्ट्राकरालं शिरः ।
द्राक् शाखामृगचक्रचूर्णनभयादादाय तारापथात्
प्रक्षिप्तं च महार्णवे हनुमता दृष्टं च गत्वासुरैः ॥ ८२ ॥

रावणः । हा वत्स कां दशां दशकण्ठेन नीतोऽसि ।

नेपथ्ये ।

देवाः सर्वे विमानान्यपनयत रविस्यन्दनो यातु दूरे
विश्वे शाखामृगेन्द्राः परिहरत रणप्राङ्गणं राक्षसाश्च ।
वेगस्तम्भाञ्जनाद्रिप्रतिनिधिरवधिः सर्वविस्मापकानां
लङ्कातङ्कैकहेतुर्निपतति वियतः कौम्भकर्णः कबन्धः ॥८३॥

रावणः । शोकनाटितकेन ।

शैशवः सोऽद्यापि शङ्कां त्यजति न भवता कण्ठसूत्रार्धकृष्टो
गौरीसिंहेन्द्रदन्तिद्विनयरणविधिं त्वत्प्रणीतं स्मरामि ।
तच्चास्ते त्वच्चरित्रं लिखितमिव पुरो मद्दृशां यत्सुमेरु-
र्वत्सेनोदस्यमानो रचितचटुशतं मोचितः स्वर्गिवर्गः ॥ ८४ ॥

इति रोदिति ।

दक्षिणतः सुमुखः । अयमपरः क्षते क्षारावसेकः ।
आकर्णाकृष्टचापोन्मुखविशिखशिखाशेखरः शूलपाणि-
र्बिभ्राणो भैरवत्वं बहलकहकहारावरौद्राट्टहासः ।

ध्यातः सौमित्त्रिणाऽथ प्रसरदुरुनरोत्तालवेतालमाल-
स्तद्वक्त्रादुद्गवह्निः समजनि शिखिभिर्भस्मसादिन्द्रजिच्च ॥ ८५ ॥

रावणः मूर्च्छति सर्वे यथोचितमुपचरन्ति ।

रावणः । मूर्च्छाविच्छेदनाटितकेन ।

शेतां संप्रति वासवश्चिरभवन्निद्राजडैर्लोचनै-
र्जायन्तां विबुधोपयोग्यकुसुमाः सर्वेऽपि दिव्यद्रुमाः ।
बन्धाःस्वर्गसदां च सन्त्व नगडाः प्राप्तोऽसि तं गोचरं
मद्वक्त्रैरपि वत्स नाम दशभिर्वक्तुं न यः शक्यते ॥ ८६ ॥

साक्रन्दं रुदित्वा । हंहो किङ्करा मन्दोदरीं द्रष्टुमिच्छामि इति परिक्रम्य सर्वे निष्क्रान्ताः ।

॥ इति वीरविलासो नामाष्टमोऽङ्कः ॥

## ॥ अथ नवमोऽङ्कः ॥

अतः परं रावणवधो भविष्यति ।

ततः प्रविशति यमपुरुषः । तत्रभवतो लुलायलक्ष्मणः सकलप्राणभृतां विहितविनाशस्य कीनाशस्य किमपि विश्वातिशायिनी प्रभविष्णुता । यतः ।

नित्यस्मिताम्बुरुहविष्टरसंनिविष्टः
स्वेच्छाविनिर्मितचतुर्दशलोक एकः ।
ब्रह्मेति यः किमपरं कविता श्रुतीनां
तस्यापि निःश्वसितसंहृतिराः कृतान्तात् ॥ १ ॥

परिक्रम्य पार्श्वे विलोक्य च । अहो नक्तंचरचक्रवर्त्तिनो वीरचूडामणेः किमपि निष्प्रतीपमाज्ञातं यदेषोऽस्मि तेनापि

भगवता भूर्भुवःस्वस्त्रयविहितनियमेन यमेन विजनेऽपि अवसि ममादिष्टः। यथाज्ञापितोऽस्मि पुरुहूतेन यद्गुत विनतानन्दनः स्यन्दनरूपतामारोप्यास्माभिः परिकल्पितमातलिसूतमुनीतसारथिर्दाशरथिः समरभूमौ जैत्रं पत्रं कृतः संप्रति तु तादृशस्य रामभद्रस्य तादृशेन रावणेन सह द्वन्द्वयुद्धमनुमन्यामहे दिदृक्षामहे च तदुद्धृतनिजाक्षपटलपटलीभ्यां लङ्कालोकलेखमानमयेन जानीमः।

कदा केषां च केभ्यश्च तयो लङ्कानिवासिनाम्।
रामात्तु दशकण्ठस्य किंविधो भविता वधः॥ २॥

येन तत्रैव क्षणे चारणोपदिश्यमानमहावीरप्रकाण्डप्रचाराः पुत्रदर्शनकुतूहलिना दिव्यरूपेण परमसुहृदा दशरथेन सह संग्राममसीमानमवनराम इति तद्वृत्तमुख महाक्षपटलिकं मद्वचनाच्चित्रगुप्तमादिश येन लङ्कालेख्यकमुद्धृत्य समर्पयति पुरन्दरश्रावणाय तस्मावच्चित्रगुप्तमेवोपसर्पामि। परिक्रामितकेन विचिन्त्य अहो दशाननः सर्वेषामुपरि पराक्रमेण तथाहि।

यत्र दृष्टे हरेरक्ष्णां सहस्रं कुड्मलायते।
कृतान्तदण्डः सोऽप्यस्य कण्ठे किमपि कुण्ठितः॥३॥

अपिच।

अवतरति विधाय ब्रह्मदण्डं प्रचण्डं
सकलजननभाजां कल्पितान्ते कृतान्ते।
समरशिरसि यस्य प्राप भङ्गं धुनाङ्गः
खुरदलितधरित्रीचित्रकायो लुलायः॥ ४॥

कथमयं चित्रगुप्तः।

ततः प्रविशति चित्रगुप्तः । अङ्गभङ्गनाटितकेन ।

दिवानिशं रात्तसमगडलस्य
प्रचगडरामानुचरैर्जितस्य ।
लिखतो मे निधनप्रपञ्चं
स्थितः करः खेदजडाङ्गुलीकः ॥ ५ ॥

पुरुहूतः । उपसृत्य कर्णे एवमेवम्

चित्रगुप्तः । यदादिशति स्वामी । इदमर्ध्यते निबन्धोद्धरण-नाटितकेन न खलु कश्चिदिह प्रच्छन्नो वा मत्तो वा यो मन्त्रं निर्भेदयेत् सात्तात्काराय तत् प्रतिश्रावय । पुरुषो वाचयति ।

अतिक्रान्ते कृते काले प्राप्ते त्रतादिवत्सरे ।
कृष्णकार्त्तिकपत्ताद्यदिवसोदययोगिनि ॥ ६ ॥
रामेकरनसुग्रीवप्लवङ्गमबलैर्बलात् ।
लङ्कां लङ्कारनां विभ्रत्युपरुद्धा महोदधेः ॥ ७ ॥
धूम्राक्षं आधधूम्राक्षमकम्पनमकम्पनम् ।
हनवानञ्जनीजन्मा भिन्नाञ्जनसमप्रभम् ॥ ८ ॥
प्रहस्तो दीर्घहस्तेन नीलेनाशु निर्मीलितः ।
द्वितीयेऽह्नि द्विधा चक्रे कुम्भकर्णं रघूद्वहः ॥ ९ ॥
नरान्तकस्यान्तकोऽभूदङ्गदो रुचिराङ्गदः ।
नीतो देवान्तकश्चान्तं त्रिशिराश्च हनूमता ॥ १० ॥
ऋषभेण महापार्श्वः पार्श्वपीडनतो हतः ।
चक्रेऽतिकायं निष्कायं तृतीयेऽह्नि च लक्ष्मणः ॥ ११ ॥
कुम्भकर्णोद्भवौ कुम्भनिकुम्भौ दम्भपण्डितौ ।
हरिराजहनूमद्भ्यां चक्राते यमसेवकौ ॥ १२ ॥

मकराक्षं सरोजाक्षः खरपुत्रं खरान्तकः ।
रामो गुणद्रुमारामो निजघान घनोन्नमम् ॥ १३ ॥
मेघनादं महानादं सायकैर्हतनायकैः ।
लक्ष्मणः सिंहलक्ष्माणं बबाध प्रियबान्धवः ॥ १४ ॥
महोदरो विरूपाक्षो विरूपाक्षो महोदरः ।
चतुरेण चतुर्थेऽह्नि सुग्रीवेण रणे हतौ ॥ १५ ॥
संग्रामे वीरसंग्रामे राजितः समराजितः ।
चक्रे रणमहाचक्रे मार्गणैर्मर्ममार्गणैः ॥ १६ ॥
दशकण्ठो धृतोत्कण्ठो राघवादस्त्रलाघवात् ।
पञ्चमेऽहनि पञ्चत्वं प्रयामेन प्रयास्यति ॥ १७ ॥

युगलकम् । चित्रगुप्तः । तदपरिक्षीणकालं भगवन्तमुपतिष्ठ येन पुरन्दरादेशमनुतिष्ठति स्वामी ।

इति निष्क्रान्तौ विष्कम्भकः ।

ततः प्रविशतः पुरन्दरदशरथौ चारणमिथुनं च ।

चारणः । आर्य मातले सकलद्यानवेश्वरपुराक्रमणं सौत्रामणं अतिद्रुक्कूनहलोत्तानितलोकलोचनपक्ष्माणमैरावणलक्ष्माणं गगनाङ्गणसंचरणवेगतरलितमाणिक्यं किङ्किणीनिनदनिःस्यन्दनं स्यन्दनमितः कुरु । अयमसावतिसुरासुरसङ्गरनिवेशो रामरावणयोः समरसंरम्भाङ्कुशः । सर्वे रथवेगं नाटयन्ति ।

दशरथः । भगवन् गीर्वाणनाथ इतः प्रसादं विधाय निधीयन्तां दृष्टयः ।

अयमनुकृतवल्लीफुल्लतापिच्छगुच्छो
रणभुवमवतीर्णः कार्मुकी रामभद्रः ।

अयमपि दशकण्ठः कुण्ठिताम्भोदशोभः
परिकलयति बाणं भ्रान्तकोदण्डदण्डः ॥ १८ ॥

कर्णं दत्त्वा आकाशे । किमाह रभसोल्लासितहृदयामोद-मुद्रो रामभद्रः ।

भो लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किंचिद्गतम् ।
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैव सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥ १९ ॥

पुरन्दरः । सखे भूकाश्यप कतिहायनः पुनरयं वत्सो राम-भद्रो येनेदृशान्यतिपरिणतप्रणयानि च वचांसि वक्तुं शिक्षितः ।

दशरथः । सविनयम् । देव भवदनुग्रहस्यैष प्रभावः स खल्व-यस्कान्तमणेरनुभावो यदयो द्रवति । आकाशे कर्णं दत्त्वा । किमाह राक्षसराजः । रे रे रावण दोर्दण्डचण्डिमाहृतराम त्वत्-पूर्वपुरुषस्यापि प्रहरणैर्नेव सोढमासीत् तथाहि । स मया ।

भृङ्गः स्तम्बेरमेणेव मदलम्पटचेष्टितः ।
अनरण्यो वरेण्यश्रीश्चपेटो चिपिटीकृतः ॥ २० ॥

किञ्च रे अनरण्यकुलकुमार ।

वक्रं चक्रं मुरारेर्मयि कुपितवधूकुण्डलक्षेपलीला-
मस्मिन्नंसे विभिन्नस्तडिति विसलताकाण्डवत् कालदण्डः ।
वक्षस्यूर्जस्वि वज्रं गतमिह च तुलां स्त्रणहारप्रहारै-
र्यत् सत्यं पत्रिणस्ते मम वपुषि घने मन्मथास्त्रीभवन्ति ॥ २१ ॥

पुरन्दरः । विचिन्त्य । अहो महदन्तरं रामरावणयोर्वचन-चातुर्यं प्रति यद्वा मतिः परिणमन्ती पुरुषमुद्रात्तयति न वयः ।

चारणः । कर्णं दत्त्वा आकाशे । किमाह रामभद्रः । तर्हि सङ्गतामयमनङ्गबाणोपमानो बाणः ।

चारणो । ससंभ्रमं प्रणम्य । भअवं पुरन्दर णिवेसीअन्तु वि-सट्टकन्दोट्टकाणणमणोहरा इदोइदो अच्छिविक्खेहा । जदो पढमं कोदंडमंडलादो पलअकेउदंडप्पमाणो बाणो पच्छा को-सलणरिंदणंदणस्स वअणादो वाणी णिग्गता भअवं इंदा-णीवल्लह अस्सुदपुव्वं अदिट्ठपुव्वं च रामचंदचरिदं जं दाणिं दसाणणस्स मंदोदरीचडुलचुंबणविलुत्ततिलअबंधे णिडालवट्टे जअधअदंडत्तणमुवणीदो बाणो * ।

चारणः । सुगेहिनि सद्दृष्टिरसि ।

यस्मिन्त्र्यम्बकमम्बिकापतिरसौ देवस्तृतीयं वह-
त्याद्यं यत्र च रोचनाम्बुतिलकं न्यस्यन्ति पृथ्वीभुजः ।
क्रोधे द्राक् भ्रुकुटीपुटेन घटते यच्च त्रिभङ्गात्मना
तत्रैव त्रिदिवद्रुहः प्रथमतो रामेण बाणोऽर्पितः ॥२२॥

चारणी । सविषादम् । हद्धिहद्धि हदासदसकन्धरेण वि णिब्भरदलदिंदीवरवणाहिरामस्स रामस्स गिरिसिलाविसालं वच्छत्थलमुद्दिसिअ कअंतदाढाजरठो सरो सन्धिदो † ।

* भगवन् पुरन्दर निवेश्यन्तां विशदकमलकाननमनोहरा इतइतो-ऽक्षिविक्षेपाः । यतः प्रथमं कोदण्डमण्डलात् प्रलयकेतुदण्डप्रमाणो बाणः पश्चात् कोशलनरेन्द्रनन्दनस्य वदनाद्वाणी निष्क्रान्ता । भगवन्निन्द्राणीव-ल्लभ अश्रुतपूर्वमदृष्टपूर्वं च रामचन्द्रचरितं यदिदानीं दशाननस्य मन्दोदरी-चटुलचुम्बनविलुप्ततिलकबन्धे ललाटपट्टे जयध्वजदण्डत्वमुपनीतो बाणः ।

† हा धिक् हा धिक् हताशदशकन्धरेणापि निर्भरदलदिन्दीवरवनाभि-रामस्य रामस्य गिरिशिलाविशालं वक्षस्थलमुद्दिश्य कृतान्तदंष्ट्राजरठः शरः संहितः ।

दशरथः । कः कोऽत्र धनुर्धनुः पुरन्दरप्रसादीकृतसखिभावे सति दशरथे कथमिव रावणो रामभद्रं प्रहरतु ।

पुरन्दरः । सखे दशरथ द्वन्द्वयुद्धमिदमनुचितं क्षत्रधर्मस्य दिव्यभावस्य च यद्द्वन्द्ववृत्तिरपि शस्त्रं गृह्णाति ।

दशरथः । तत् कथयतु बन्धुः किमत्र साम्प्रतम्

पुरन्दरः । यदत्र साम्प्रतमसाम्प्रतं वा राघवधुरन्धरो रामदेव एव तद्वेद ।

चारणः ।

यन्मैथिलीमदनतल्पतलं यदात्त-
मारीचरत्नमृगचर्म शिलाघनं च ।
रामस्य वक्षसि चिरोज्झितहारदाम्नि
तस्मिन्नयं दशमुखेन शरो निखातः ॥ २३ ॥

दशरथः । कथं रावण निपुणोऽसि यदेकेन बाणेन हृदये द्वयं ताडितं रामो दशरथश्च ।

चारणः ।

मन्दोदरीस्तनविसूत्रितकुङ्कुमं य-
द्यद्दुन्दुघातकणचूर्णविकीर्णहारम् ।
लङ्केश्वरस्य हृदि तत्र भवद्भवाऽपि
मारीचरक्तपिहितो निहितः पृषत्कः ॥ २४ ॥

चारणौ । सचमत्कारम् । आअण्णाकड्ढिदकोदंडमंडलनिग्गलंतसरधोरणीणीरंधणिरुध्धभुअणकंदरो सुट्ठु खु रामरावणाणं णिभ्भरो समरसंरंभो अहह का वि लक्खणजेट्ठस्स दसरहणं-

दसास्स धाणुक्कदा जेण अदिक्कमिअ रहवरकेउदण्डं सरच्छडा पअट्टंति * ।

पुरन्दरः । मन्ये महामहाराज अमुना रामशरविद्यावैशारद्येन देवं त्रिपुरान्तकरं शङ्करमनुस्मारितोऽस्मि ।

दशरथः । रावण त्रैलोक्यनाटितकेन कथं रामभद्रचरितप्रमोदवते भगवते महेन्द्रायापि कुप्यति दशास्यः । कर्णं दत्त्वा आकाशे । किमाह रावणः ।

स्मर्तुं युक्तः स तव समयः संगतं त्वां विमोक्तुं
शक्या यस्मिन्नहमतिशुचा दर्शिता भर्तृभिक्षाम् ।
यद्वा युद्धा जन इव कथं कथ्यता राक्षसेन्द्रः
पाणौ यस्य स्मयगरुरुपास्ते कथं चन्द्रहासः ॥ २५ ॥

अपिच रे कपिलरोमशवाहो अहल्याजार ।

बाणान् स्यन्दनकेतुयष्टिमुहुर्हे रामस्य नाम क्षितान्
दृष्ट्वा वासव किं दृशा दशशतैर्या निःशल्यमुत्फुल्लानि ।
सद्यस्तापमकार्षमितोऽस्य विमतेः शौर्यं नु मत्वा गिरस्त्वां कारागृहदत्तगाढनिगडं कर्ता पुनः रावणः ॥ २६ ॥

दशरथः । भूय आकाशे कर्णं दत्त्वा । किमाह वत्सो मे रामभद्रः अहो वालिबालवयस्य पौलस्त्य एव दुर्दम्य वीरवरपरिभाषाः प्रवर्तन्त तत् किमिदं नाम यदन्यः प्राणिती त्वयस्मै कुप्यते तदेहि मामेव योधय । यद्दुस्मरं गाढ़ दाश-

---

* आकर्णाकृष्टकोदण्डमण्डलनिर्गलच्छरधारणीतः समानिरुद्धभुवनकन्दरः सुष्ठु खलु रामरावणयोर्निर्भरः समरसंरम्भः । अहह कापि लक्ष्मणज्येष्ठस्य दशरथनन्दनस्य धानुष्कता येनातिक्रम्य रथवरकेतुदण्डं शरच्छटाः प्रवर्त्तन्ते ।

रिथना क्षत्रियेण भवान् विनेय एव । विचिन्त्य, । किमाह रावणः रेरे मानुषीपुत्रायममावत्क्षत्रियो रावणः स भवान् क्षत्रियो रामः तद् दृश्यतां कतरो विनेयः कतरो विनेतेति, किमाह रामभद्रः हंहो अमानुषीपुत्र अयमसौ क्षत्रियो रामः स भवानक्षत्रियो रावणस्तदत्र दृश्यतां कतरो विनेयः कतरो विनेतेति ।

चारणः । विलोक्य । कथममर्षेण दर्पिताभ्यां रामरावणाभ्यां परस्परं प्रत्युपक्रान्तमिषुवर्षाद्वैतम् ।

चारणी । ससंभ्रमम् । सुरपरमेसर भीसणं वट्टदि । जदो णिविडपाडिदपडाआवडा विधुरिदबंधुरधुराबंधा तक्खणदो खंडिदक्खदंडा ताडणभंगिभंगुरिदपग्गहपरिग्गहा णिग्गहीद-गमणपवलचक्कचंकमणा उद्दामुद्दलिददीहकूवरप्पवरा इमाणं असमाणा परिप्फुरंति दीहप्पमाणा बाणा । अविअ पडिक्खलि-दजक्खपक्खा भग्गचारणसंचरणा मंथरिदणिरवज्जविज्जाहर-विहारा रभसुम्मूलिदसुरासुरप्पसरा विसण्णापण्णअपवचविब्भ-डवित्थारा णिट्ठुरणिट्ठाविदगंधव्वगव्वा पअडविध्धंसिदसि-ध्धसिध्धा गअणंगणुत्तासिदसउन्तसंताणा कहिं दाणिं पुण इमाणं ण पसरिदा सरसंघाआ * ।

* सुरपरमेश्वर भीषणं वर्तते यतो निबिडपाटितपताकापटा विधुरितबन्धुरधुराबन्धास्तत्क्षणतः खण्डिताक्षदण्डास्ताडनभङ्गिभङ्गुरितप्रग्रहपरिग्रहा निगृहीतगमनप्रबलचक्रचङ्क्रमणा उद्दामदलितदीर्घकूबरप्रवरा अनयोरसमानाः परिस्फुरन्ति दीर्घप्रमाणा बाणाः । अपिच परिस्खलितजक्षपक्षा भग्नचारणसंचरणा मन्थरितनिरवद्यविद्याधरविहारा रभसोन्मूलितसुरप्रसरा विषण्णापन्नगप्रपञ्चविभ्रमविस्तारा निष्ठुरनिष्ठापितगन्धर्वगर्वाः प्रकटविध्वंसितसिद्धसिद्धा गगनाङ्गणोत्त्रासितशकुन्तसन्तानाः क्वेदानीं पुनरेतयोर्न प्रसृताः शरसङ्घाताः ।

चारणः । सम्यग्विभाव्य । अति हि सुदूरमन्तरं कार्मुककर्मणि विरञ्चिविरोचनकुलतिलकयोरनयोर्हस्तलाघवस्य तथाहि ।

रघुपतिवदनेन्दौ कार्मुकैः पङ्क्तिसंख्यै-
र्दश विकिरति बाणान् यातुधानप्रधानः ।
दशभिरपि च काण्डैरेककोदण्डबाहौ
प्रहरति दशवक्त्रौ राघवो रावणस्य ॥ २७ ॥

अपिच । सुरचक्रवर्तिन् इह हि कामिनामनुरागपरिग्रहो गुणलवलाभलोभेन दोषप्रमोषमावहति तथाहि ।

रामक्षिप्तान् प्रतीच्छत्यथमिह विशिखान् वक्षसा राक्षसेन्द्रः
सीताहस्ताम्बुजार्पितमलयभवस्यासकान्मन्मथान्धः ।
सोल्लासं हारवल्लीकवचपरिचिते ते तु तस्मिन् विशन्तः
स्वेदाम्भः प्रारभन्ते पुलकमुपनयन्त्युद्रुतिं चार्पयन्ति ॥२८॥

आकाशे कर्णं दत्त्वा । किमाह सविचिकित्सक्रोधं रामः न केवलममुना समबाणवर्षेण रावणप्रमार आरभ्यते अपित्वेतस्य जानकीकरतलस्पर्शकेलिसंभावनीयगात्रेषु पत्त्रिषु रामास्त्रकञ्चुकं यावदामोच्यते तद्भवतु विश्वामित्रोपदिष्टमन्त्रैर्दिव्यास्त्रैरमुमायोधयामि ।

चारणौ । सचमत्कारम् किं उण एदं आमूलफलिदप्फुलिंगज्झडिलज्जालावलीविलीणतुहिणसरणिसारणीपूरिज्जमाणमंदाइणीचंदभाआपहुदिनदीसत्यमंथरिदवित्थारो सअलकुलसेलचक्कवट्टी कुबेराधिट्ठिद दिसमधिवसंतो हिमवंतो संतवणुत्तरलसिलाजदुणीसंदणिज्झरदहिज्जंतवरणचंकमणक्कंदिअकरिन्दपवेससम्मसंतसोत्तसलिलमद्दप्फालिदतडंतणिवतंडमत्थर-

वित्थारपअट्टसद्दसंदोहभरिदगंभीरगुरुगुहाकुहरमज्झो विंझो सिमिसिमाअंतसंततसिरिखंडमंडलीपब्भट्ठभुअंगिंदभोअभरिज्जं-तत्तंबवण्णोसोत्तसंत्तासिदसिप्पिसंपुडमुहपलोट्टमोत्ताहलकरं-बिदत्तंबवण्णीपवण्णविच्छिण्णणिअंबडंबरालंकिददक्खिणमहीव-लओ मलओ डाहकुविदकुंभसंभवमहामुणिणिग्गाहणोदिण्णविव-ण्णदिट्ठिच्छडाकडप्पसंकोडिदचडुलजालुप्पीडपीडापरिहरिज्ज-माणमाणिक्कचक्कवालवल्लिअलदाभवणगब्भसंभाविदहुदवहु-च्छेदमुहुत्तसुहपसुत्तविज्जाहरमिहुणजणिदमणमोहणो रोह-णो * ।

पुरन्दरः । ध्रुवं शस्त्रमाग्नेयमामन्त्रितं पौलस्त्यदमनविधा-वस्तन्द्रेण रामचन्द्रेण । यतः ।

रामनर्तितमहाधनुर्मुखा-
द्यत्र यत्र निपतन्ति सायकाः ।
तत्र तत्र जलधेर्जलान्वये
कार्यतो विरचयन्ति वाडवम् ॥ २९ ॥

अपिच ।

* किं पुनरिदमामूलफलितस्फुलिङ्गजटिलज्वालावलीविलीनतुहिन-मणिमाणरणीप्रयमाणमन्दाकिनीचन्द्रभागाप्रभृतिनदीसार्थमन्यरितविस्तरः सकलकुलशैलचक्रवर्तीः कुबेराधिष्ठितां दिशमधिवसन् हिमवान् सन्त-पनोत्तरलीशिलाजतुनिस्यन्दनिर्भरदह्यमानचरणचङ्क्रमाणाक्रन्दितकरीन्द्रप्रवं-शसमुच्छ्वसत्स्रोतःसलिलस्फालिततटान्तनिपतत्प्रस्तरविस्तारप्रवृत्तशब्दस-न्दोहभरितगम्भीरगुरुगुहाकुहरमध्यो विंध्यः सिमसिमायमानसन्ततश्रीख-ण्डमण्डलीभ्रष्टभुजंगेन्द्रभोगभ्रियमाणताम्रपर्णीस्रोतस्सन्त्रासितशुक्तिसंपुट मुखपतितमुक्ताफलकरम्बिततताम्रपर्णीपवर्नाविच्छिन्नितम्बडम्बरालंकृतद-क्षिणमहीवलयो मलयो दाहकुपितकुम्भसंभवमहामुनिनिर्गाहनोदत्तविव-र्णदृष्टिच्छटाकलापसंकोटितचटुलजलोर्मीडपीड्यमानमाणिक्यचक्रवा - लवल्लितलताभवनगर्भसंभावितहुतवहोच्छेदमुहूर्तसुखसुप्तविद्याधरमिथु - नजनितमनोमोहनो रोहणः ।

सद्यः कल्पद्रुमाणां मणिकुसुमवतां वर्त्तते दावदाहः
क्रन्दन्त्युत्तप्तधाराद्रुतिकृतकरकावृष्टयस्तोयवाहाः ।
रामस्योच्चण्डचापप्रणिहितहुतभुग्मार्गणार्चिःप्रपञ्चै-
स्तूर्णोत्तीर्णः समुद्रं सरति च विसरो मेरुहेमद्रवस्य ॥३०॥

चारणः । आकाशे कर्णं दत्त्वा । किमाह रावणः कथं दिव्यास्त्रसमरसमारम्भी रामस्तदहमपि समारभे । यद्वा ।

आग्नेयास्त्रं हृदयदवथुर्वारुणं हन्त शस्त्रं
धाराबाष्पं पवनशरतां यान्ति च श्वासदण्डाः ।
तज्ज्ञानक्या किमिव न कृतं रक्षसां स्वामिनो मे
दिव्यैरस्त्रैर्यदयमपरं तापसः कर्तुकामः ॥ ३१ ॥

चारणौ । आमूलज्वलितपारिजाततरुराजो उक्कंपिदा-णल्पकप्पपादवा विसुक्तिदसंताणअतरुसंताणा विमद्दिदामंदमं-दारद्दुमा णिद्दलिदुग्गंदणवणहरिअंदणा इमे आसुत्तिदसत्त-भुअणावसाणा पवमाणा पवट्टन्ति * ।

पुरन्दरः । नूनमात्मानि काशानवमस्त्रमसमर्थं समर्थयता त्रिभुवनाभोगभङ्गनिमित्तमग्निमारुतसंयोग इति सामीरणमासू-त्रितं राक्षसराजेन तथाहि ।

दिव्यानां यानपङ्क्तीर्दिशिदिशि विकिरन् भग्नचिह्नोरुदण्डः
पक्वानां स्वर्द्रुमाणाममरमधुलिहां कृष्णशाखाप्रकाण्डः ।
भञ्जन् बर्हावतंसं हरसुतशिखिनः पिच्छविच्छेदनाभि-
र्वायुर्वात्येव चण्डो जलधितटरुहां मर्दनो विद्रुमाणाम् ॥३२॥

---

* आमूलोज्ज्वलितपारिजाततरुराजा उत्कम्पितानल्पकल्पपादपा विसू-त्रितसंतानतरुसंताना विमर्दितामन्दमन्दारद्रुमा निर्गलितनन्दनवनहरि-चन्दना इमे आसूत्रितसप्तभुवनावसानाः पवमानाः प्रवर्तन्ते ।

W

चारणी । किं उण मसिणवट्टिदराअवट्टसिणिद्धमुद्धमुद्धसामलच्छाएण वि च्छाइज्जइ गअणङ्गणं दुद्दिणेण आवज्जिज्जइ कलकलरवुक्कंठाविसंठुलकंठाहिं तंडवाडंबरो सिहंडिमंडलीहिं णिबिडिज्जइ मिणालदंडपंडुराहिं मंडिदबम्हंडकंदराहिं जलधाराधोरणीहिं गज्जिज्जइ णिबिडुल्लासिअवंसकरिकरिल्लविद्दरिल्लेहिं फारप्फालिदगंभीरभेरीभीसणेहिं जलहरेहिं * ।

पुरन्दरः। मन्ये पवनोद्दीपितदहनास्त्रशान्तये जलधरास्त्रमिदमाहूतं रामभद्रेण तथाहि ।

तैलस्निग्धान्ध्रनारीचिकुरविरचनामेचकाः शक्रचाप-
ज्योतिर्लक्ष्माण एते निचुलपरिचिताश्चातकाचान्तवाराः ।
न्यस्यन्तः केतकीनां मुकुलपरिकरं केकिनां नृत्तकारा-
स्तारावर्त्मावमन्तः कमलकवलनाः पूरयन्त्यम्बुवाहाः॥३३॥

ततश्च ।

रोदसीकन्दराभोगमानयष्टिसमक्रमैः ।
क्रियतेऽर्णवमग्नेव धाराम्भोभिर्जगत्त्रयी ॥ ३४ ॥

चारणी । पेक्खदु देवो अण्णोण्णजुज्झंतजलहत्थिसत्था कल्लोलकेलिणिलुक्कंतगिरिपक्खिणो लक्खिज्जंततिअसिंदसिंधुरबंधवा समुल्लसंतपोऊससेसा दीसंतदेवद्दुमपाडवालवाला

---

* किं पुनर्मसृणवर्त्तितराजपट्टस्निग्धमुग्धेन श्यामलच्छायेनापि छाद्यते गगनाङ्गणं दुर्दिनेन । आवर्ज्यते कलकलरवोत्कण्ठाविसंष्ठुलकण्ठाभिस्ताण्डवाडम्बरः शिखण्डिमण्डलीभिः । निबिडायते मृणालदण्डपाण्डुराभिर्मण्डितब्रह्माण्डकन्दराभिर्जलधाराधोरणीभिः । गर्ज्यते निबिडोल्लासितवंशकरिकरीन्द्रलट्टैः स्फारोस्फारितगम्भीरभेरीभीषणैर्जलधरैः ।

अवलोइज्जंतनाराअणसूअरसमुध्धरिद्धरणिवेठणिलुक्कणट्ठा-
णा वित्थरंतकोत्थुहसगोत्तमणिकरंबिदपाआलजंबाला उच्छलं-
तलच्छीबालविलासुद्देसा सप्पवंचपंचजणजणणीसंखिणीसणा-
हा ससंभमब्भमंतकच्छवडिंभगब्भा पअडिज्जंतदामोदरणिद्दा-
विमद्दसअणिज्जसेसरमणिज्जा माहवमहातिमिगोत्तगिलिज्जं-
ततिमिंगिला णिब्भरं भरंति भुअणाइं इमे समुद्दा * ।

पुरन्दरः । नूनमात्मनि वारुणास्त्रमप्यतन्त्रं मन्यमानेन त्रिभुवनाभोगगर्भमहाक्रन्दरप्लावनाय जलं जलसंपृक्तं महाज्वालाय कल्पत इत्यौदन्वतमस्त्रमाहूतं पौलस्त्येन तथाहि ।

कुर्वन्तो वाडवाग्नेर्द्रुतकरिमकरग्रासमर्चिःप्रचारं
दैत्यस्त्रीमुक्तहाहारवचकितवलच्छुक्तिनिर्मुक्तमुक्ताः ।
पत्तोत्क्षेपेण चण्डोड्डमरितपयसः पक्षिणां क्ष्माधराणां
त्रीन् लोकान् प्लावयन्ति प्रसभविरचितावर्तमुद्राः समुद्राः ॥३५॥

चारणौ । भअवं दससदक्ख पेक्खपेक्ख कलिदकलिका-
लकवलणा सत्तसाअरपाणप्पवीणा णिव्वाणणअरराअमग्गा
धम्मदुममहारामा कोधपाअवप्पसरपरसुणो णिविडिदजडाजू-
टबंधा कमंडलुमंडिदहत्था पअडिदजोअपट्टा बंम्हसुत्तप-

* प्रेक्षतां देवः । अन्योन्ययुध्यमानजलहस्तिसार्थाः कल्लोलकेलिनिरुत्क्रान्तर्गिरिपक्षिणो लक्ष्यमाणत्रिदशेन्द्रसिन्धुरबान्धवाः समुल्लसत्पीयूषशेषा दृश्यमानदेवद्रुमपादपालवाला अवलोक्यमाननारायणसूकरसमुद्धृतधरणिपृष्ठनिलयनस्थाना विस्तार्यमाणकौस्तुभसगोत्रमणिकरम्बितपातालजम्बाला उच्छलल्लक्ष्मीबालविलासोद्देशा सप्रपञ्चपञ्चजनजननीशङ्खिनीसनाथाः ससंभ्रमभ्रमत्कच्छपडिम्भगर्भाः प्रकटायमानदामोदरनिद्राविमर्दशयनीयशेषरमणीया माधवमहातिमिगोत्रगिल्यमानतिमिङ्गिला निर्भरं भरन्ति भुवनानीमे समुद्राः ।

विन्तिदखंधबंधा भअवंतो अगत्थिमहेसिणो ऽलक्खसंखा मं-
चरंति * ।

पुरन्दरः । मन्ये त्रिभुवनपरिप्लावनपयःपाननिमित्तमगस्त्यो-
पदिष्टमगस्त्यास्त्रं धनुषि संहितं रघुकुलराजपुत्रेण तथाहि ।

लोपामुद्रानिबद्धोपचरणविधयो धौतवल्कोत्तरीया
रक्षानामाधिराज्ये विरचितरतयो ब्रह्मसूत्राञ्चितांसाः ।
एते निर्यान्त्यगस्त्याश्चलचुलकपुराचान्तसप्ताब्धिवारो
रुद्राक्षाक्षावलीभिर्द्विगुणवलयिता बिभ्रतः कर्णपालीः ॥३६॥

चारणः । सविस्मयम् । नमुचिमथनमन्यरितमन्यो शतमन्यो
दिव्येनास्त्रजातेन दिव्यमस्त्रजातं विजित्य तत् किमपि कृतं
रक्षोलक्ष्मीविरामेण रामेण यदनिशं विमृशतोऽपि मे न चेतः
प्रत्येति न वाच उच्चरन्ति । निरङ्कुशा दशाननस्याज्ञा । विभाव्य
सावष्टम्भम् । यदिदं निवेद्यते ।

विश्वाज्ञादानदक्षाक्षरमुखरमुखं चन्द्रहासोपपाद्य-
च्छेदक्रीडारसज्ञं तदिदमनवधिक्रोधहुङ्कारधारि ।
सार्धं शुद्धान्तनारीनयनजपयसासूयितं देवदारै-
राकण्ठाद्दाशकण्ठं भुवि पतति शिरो रामभल्लावलूनम् ॥३७॥

पुरन्दरः । हंहो ऐन्दुमतेयातिदुष्करं कृतं रामभद्रेण यतः ।

शम्भोरर्घेनिजकरचरच्चन्द्रहासप्रसूतां
लङ्कानाथः किमपि सुबहोर्विस्मरत्येष कालात् ।

---

* भगवन् दयग्यतात्त प्रेक्षस्वप्रेक्षस्व कलितकलिकालकवलनाः सफला-
स्नपानप्रवीणा निर्वाणनगरराजमार्गा धर्मद्रुममहारामाः क्रोधपादपप्रसर-
करणवो निर्बिडितजटाजूटबन्धाः कमण्डलुमण्डितहस्ताः प्रकटितयोगपट्टा
ब्रह्मसूत्रपवित्रितस्कन्धबन्धा भगवन्तोऽगस्त्यमहर्षयो लक्षसंख्याः संचरन्ति ।

धाराज्योतिस्तरलितशिखैः साम्प्रतं रामबाणैः
कण्ठच्छेदव्यतिकररुजं लम्भितः स्मारितश्च ॥ ३८ ॥

दशरथः । शौर्यगाम्भीर्यं त्रिभुवनातिशायिनी राक्षसराजस्य यदित्थं गतेऽपि न चलितं प्राचाहङ्कारेण तथाहि ।

एतल्लूनं दशमुखशिरः संमते कण्ठपीठा-
च्चतुर्थेत्ते धनुषि सशरे चैतदुयाट्टहासम् ।
एतद्रामं प्रति च कुरुते धिक्शतं क्रोधवाचा-
मेतल्लङ्कामभि च भवति स्त्रीजनाश्वासनाय ॥ ३९ ॥

चारणी । विहस्य । ता अज्जपहुदि दसाणणं णवाणणं वाहरिस्सामो * ।

चारणः । प्रिये मञ्जुवादिनि जानाम्यद्यैव निराननमप्यभिधास्यसि नन्वयमोङ्कारो रावणशिरोमण्डलच्छेदविद्यायाः ।

दशरथः । प्रतिगृहीता प्रतिमोदयिनी दिव्यवाक् बद्धो वाससि ग्रन्थिः ।

चारणः । कर्णं दत्त्वा आकाशे । किमाह रामभद्रः । रेरे राक्षसीपुत्र ।

यद्दारीचरणाब्जयोः प्रथमतस्त्यक्तप्रणामक्रियं
प्रेमार्द्रेण सविभ्रमेण च पुरा येनेक्षिता जानकी ।
लूनं ते तदिदं च राक्षसशिरो जातं च शान्तं मनः
शेषच्छेदविधिस्तु सम्प्रति परं स्वर्बन्दिमोक्षाय मे ॥४०॥

पुनः कर्णं दत्त्वा आकाशे । किमाह रावणः । रेरे क्षत्रियापुत्र सुलभविभ्रमचर्मचक्षुरसि तदवलोकय कतमदत्र लूनं शिरः ।

---

* तदद्यप्रभृति दशाननं नवाननं व्याहरिष्यामः ।

दशरथः । विमृश्य । सप्रणामं सकलभूर्भुवःस्वस्त्रयैकवीर शुनासीर मायाविनिर्मितलङ्केश्वरशिरोदर्शनेन विलक्षं क्रुद्धो रामः शितकाण्डमण्डलीभिरकाण्डचण्डाभिरन्तरितमार्तण्डमण्डलाभिरखण्डोड्डमरितत्रिभुवनाभोगाभिरभिवर्षितुं प्रवृत्तः ।

चारणो । देव पेक्खपेक्ख निविडभिउडीकोडिकुडिललाडवट्टाइं जरठदाढदंडवरणिट्ठुरदट्ठाहरुट्ठाइं रहसणीसरंतदीहहुंकारदारुणणासावंसविवरंतराइं रामसरधाराधोरणीहिं चउद्दिसं झत्ति निवडंति छिण्णविवण्णाइं लंकेसरसिराइं * ।

दशरथः । चमत्कृत्य ।

यस्यांयस्यां ककुभि रभसस्पष्टदंष्ट्राकरालं
लङ्काभर्तुर्निपतति शिरो भल्लनिर्लूनकण्ठम् ।
तस्यास्तस्यास्तरलितदृशा स्वर्गिवर्गेण नष्टं
प्राक्संस्कारक्रमभयवता योजनानां शतानि ॥ ४१ ॥

सहसावलोक्य । अहो मायाविता राक्षसस्य ।

रामबाणक्षतः पातो न यावदवधार्यते ।
क्रियते तावदुद्भेदो मूर्ध्नो रावणमायया ॥ ४२ ॥

अतश्च ।

लङ्कावीरस्य मायाचयचतुरमतेर्मैथिलीनाथचाप-
व्यापारोद्भ्रान्तबाणव्रणभृतहृदयः स्वां प्रतिज्ञां विवक्षोः ।

---

* देव प्रेक्षस्वप्रेक्षस्व निबिडभ्रुकुटीकोटिकुटिलललाटपट्टानि जरठदंष्ट्रादण्डवरनिष्ठुरदष्टाधरोष्ठानि रभसनिस्सरद्दीर्घहुंकारदारुणनासावंशविवरान्तराणि रामशरधाराधोरणीभिश्चतुर्दिशं झटिति निपतन्ति छिन्नविवर्णानि लङ्केश्वरशिरांसि ।

ग्रीवागर्भप्रणालीसरणिसमुचितैकैकवर्णक्रमेण
च्छिन्नेष्वद्यैर्मुखाब्जैः कथमपि हि गिरामेति पङ्क्तिः समाप्तिम्॥४३॥

कर्णं दत्त्वा आकाशे किमाह रामभद्रः। प्रतिकूलं हि दैवं स्वारब्धमपि कार्यं विपर्यासयति तथाहि।

शत्रुध्वंसः किल जनकजासंगमस्यैकहेतु-
स्तेनारब्धं दशमुखवधाडम्बरं राघवेण।
छिन्नंछिन्नं पतति च शिरो जायते चान्यदन्य-
ल्लङ्काभर्तुस्तदिह करवै हा कथं मन्दभाग्यः॥४४॥

पुनराकाशे। किमाह रावणः हंहो राम किमलीकशिरः-खण्डनाडम्बरेण विडम्बयस्यात्मानं क्व पुनः स्वेच्छाजन्मनां रावणावयवानां विच्छेदः।

पुनराकाशे किमाह रामः। रावणायं मे प्रीतये भवज्जन्मकभावः। तथाहि।

यन्मूलतो दशशिरांसि भवन्ति यच्च
च्छेदेषु तानि शतशोऽथ सहस्रशश्च।
तत् साधु राक्षसपते कथमन्यथाऽय-
मुत्सृज्यतां जनकजाहरणापवादः॥४५॥

पुनराकाशे किमाह रावणः। आः क्षत्रियखेट कापटिकतापस धनुरारोपणसमयप्रथमगृहीतां सीतामभिलषन्नुपपतिरिव शीर्षच्छेद्योऽसि।

पुनराकाशे किमाह रामः। रेरे पिशाचापसद।

रम्भोपभोगरभसेन निरर्गलोऽसि
नो मैथिलीहरणनामसहोऽपि रामः।

न्यजननर्निन्दितपुलस्त्येऽगस्त्ये कल्याणमनुध्यायति ध्यानचक्षुषि मुनिवरिष्ठे वशिष्ठे गायति साम विश्वाम्बुजविकाशमित्रे विश्वामित्रे भयालापस्फुरिताधरे विद्याधरे निर्वाणोन्मत्तचारणहाहारवमुखरवृन्दारकवृन्दं भुवनाभोगं विदधता जीवितनिरपेक्षेण राक्षसराजेन निजस्यन्दनं सविधीकृत्य समुद्भ्रान्तसारथिर्दाशरथिरथः सपदि दोर्दण्डमण्डलेन धूर्बन्धे विधृतो भ्रामितश्च ।

दशरथः । साकूतं प्रणम्य । भगवत्यो रघुकुलदेवता दशरथमनुगृह्णीत भगवन्निन्द्र गृहाण दम्भोलिमम्भोधरलाञ्छनं धनुर्वा नन्वेष कवलीक्रियते रामचन्द्रो रावणराहुणेति मूर्च्छति ।

पुरंदरः । प्रियवयस्य किमाकुलोऽसि कियत्कालं जलदतिरस्कारिणी मार्त्तण्डमण्डलमन्तरयति ।

दशरथः । ससंभ्रममवलोकयन् हस्तमुद्यम्य समरसुन्दर पुरंदर पश्यपश्य ।

> वत्सस्य साश्वः सासश्च सचक्रध्वजधूर्युगः ।
> व्योम्नि भ्रमरकभ्रामं भ्राम्यतेऽनेन हा रथः ॥ ५१ ॥

इति पतति ।

पुरन्दरः । अये किमपि महाबलपराक्रमो राक्षसराजः ।

चारणः । कियद्वा वर्णनमर्णवस्यायं मकरालय इति ।

> वेल्लद्विद्युल्लतालीच्छुरितपरिकरैरम्बुदैर्वान्तवार्भि-
> र्दिव्यानां व्योमयानैर्भयचकितवधूवक्त्रमुक्तार्तनादैः ।
> लङ्केन्द्रेणाग्रहस्तभ्रमितरथपथप्रस्थितैस्तारकाणा-
> मुक्तालैश्चक्रवालैरिव च विरचिता वक्त्रनीराजनश्रीः ॥ ५२ ॥

नेपथ्ये कलकलानन्तरम् ।

यद्वक्त्राणां दशानामिव दश ककुभः शासितुं सृष्टिरासी-
द्विंशत्या यश्च दोर्भिर्दशगुणितमिव प्राप्तवान् वीरधर्मम् ।
लङ्केन्द्रः संयतेन्द्रो रणभुवि दशभिर्मैथिलीवल्लभेन
ज्योतिर्दीप्रैः क्षुरप्रैः स खलु विरचितो निर्विबन्धः कबन्धः॥५३॥

दशरथः । आकर्ण्य । कः पुनरयमकारणबन्धुः श्रवणामृत-वर्षिणा वचनेनास्मानाश्वासयति ।

चारणः । नेयमाश्वासना किं पुनर्बिभीषणप्रियकरणाय लङ्कावैतालिक एष निवेदयति ।

दशरथः । तत् किमिव नेदं सहस्रचक्षुषापि भगवता नयनाञ्जलिपुटपेयीकृतम् ।

चारणः । शृणु यथा ।

यावल्लीलाविचक्रध्वजहरितरलालातचक्रायमाणं
भूगोलास्फालहेतोर्भ्रमयति नभसि स्यन्दनं राक्षसेन्द्रः ।
दोर्दण्डैश्चण्डवेगोद्धृतहरगिरिभिः

दशरथः । किंचिदुत्थाय सुप्रपाता रावणकरान्दोलित-स्यन्दनभ्रमणभङ्गिस्तद्वारय धारय वत्सम् ।

चारणः । सहर्षम् । द्राक् क्षुरप्रेण तावत्
तस्यैवाकर्ण्य वाणीं दशममपि शिरश्छिन्नवान् नाम रामः ॥५४॥

पुरंदरः । विहस्य शङ्के भवत एव शब्दवेधित्वं शिक्षितमभ्यस्तं च रामभद्रेण किं पुनरुपाध्यायादधिकः संवृत्तः। विमृश्य। तदेतदुद्दामरामक्षुरप्रप्रवेशिनो ब्रह्मास्त्रस्य भूर्भुवःस्वस्स्वितयहामरं सूदितदशकन्धरमदं भद्रमाजृम्भितम् ।

दशरथः । तत् प्रियं नः ।

